राष्ट्रीय-संस्कृत-संस्थानद्वाराप्रदत्तद्रव्यसाहाय्येन प्रकाशितम्

प्रकाशक :
राज विनय प्रकाशन
ग्रा.- चकिया पो.- शंकरपट्टखौली
जनपद- कुशीनगर(पडरौना) उत्तरप्रदेश

मूल्य : रु. 41.00

प्रथम संस्करण सन्- 1995

अन्य प्राप्ति स्थान :
सुदर्शन बुक एजेन्सी
सम्पूर्णानन्द संस्कृत विश्वविद्यालय
पूर्वी गेट वाराणसी-2

मुद्रक :
साफ्टकाम्प (ग्राफिक्स)
सी.22/68, कबीरचौरा,
वाराणसी-221001

परमश्रद्धेयानां श्रीमतां गुरुवर्याणां आचार्यप्रवराणां सम्प्रति सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य न्यायवैशेषिकविभागाध्यक्षाणां प्रो. वशिष्ठत्रिपाठि-महाशयानां करारविन्दयोः सादरं समर्पणम्--------

# किञ्चिद् प्रास्ताविकम्

अथ नानाविधदुःखपीडितानां जनानां पीडामवलोक्य दयार्द्रचिन्तोमुनिः तेषां प्राणिनामात्यन्तिकदुःखनिवृत्तिकामनया आन्वीक्षिकीं शास्त्रं व्यरचयत्। तत्र च समेषामेव जीवानां प्रतिकूलवेदनीयानां दुःखानामात्यन्तिकीनिवृत्तिः पदार्थानां वास्तविकस्वरूपपरिज्ञानादेव भवितुमर्हति। इति विचिन्त्य प्रथमं पदार्थोद्देशपरकप्रथमं सूत्रंप्रणीतवान्। तच्च सूत्रम् "प्रमाणप्रमेयसंशयप्रयोजन–दृष्टान्त सिद्धान्तावयव–तर्क–निर्णय–वादजल्पवितण्डाहेत्वाभासच्छल–जातिनिग्रहस्थानां तत्त्वज्ञानान्निःश्रेयसाधिगमः" इति। अत्र सूत्रे प्रथमं प्रमासाधनीभूतस्य प्रमाणस्योल्लेखः कृतः। यतोहि मानाधीनामेयसिद्धिर्भवति। प्रमात्मकं ज्ञाने प्रमाकरणस्वरूपस्य प्रमाणस्य साधनत्वं सर्वानुभवसिद्धम्। कारणस्वरूपे परिज्ञाते एवं कार्यस्वरूपं ज्ञातं भवति। तत्र प्रमाकरणस्य प्रमाणस्य चातुर्विध्यं महर्षिणा कण्ठतः प्रतिपादितम्। "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति"। तत्र मतभेदेन प्रत्यक्षप्रमाणता इन्द्रियस्य इन्द्रियार्थसन्निकर्षस्य निर्विकल्पकज्ञानस्य च प्रतिपादिता विद्यते। प्रत्यक्षप्रमाणोपजीवकत्वात् प्रत्यक्षनिरूपणान्तरं सभेदलक्षणोदाहरणप्रदर्शनपुरःसरमनुमानस्य त्रैविध्यं प्रतिपादितम्। तच्चानुमानं स्वार्थानुमानपरार्थानुमानभेदेन द्विविधमिति शास्त्रेषु प्रतिपादितम्। यद्वस्तुप्रत्यक्षबलेन साधयितुं न शक्यते तत्साधनमनुमानप्रमाणेन साधयितुं शक्यते। तच्चानुमानं अनुमितिकरणत्वरूपं। प्राचीनमते व्याप्तिज्ञानस्य नव्यमते च लिंगपरामर्शस्य अनुमितिकरणत्वरूपमनुमानत्वं स्वीक्रियते।

स च लिंग पक्षसत्वसपक्षसत्वविपक्षासत्वाबाधितत्वासत्प्रतिपक्षितत्वात्मक पंचरूपोपपन्नः स्वसाध्यं साधयिंतु समर्थो भवति। अत एव व्याप्तिविशिष्ट–पक्षधर्मतावत्त्वमेव सद्धेतुत्वमनेनैव सद्धेतुबलेन पदार्थानां तत्त्वनिर्णयः वादिपराभवश्च कर्तुं शक्यते। अतः तत्त्वनिर्णयविजयप्रयोजकत्वं सद्धेतुत्वज्ञाने अभ्युपेयते। सद्धेतुत्वज्ञाने सत्यपि यदि व्याप्तिपक्षधर्मत्वाभाववतः दुष्टहेतोः परिज्ञानं न भवति चेत तदा तत्त्वनिर्णयः विजयश्चासम्भवि। अतः सद्धेतुत्व

ज्ञानस्य यथावश्यकता तथैवदुष्टहेत्वात्मकहेत्वाभासज्ञानमपि समेषामपिजनानां कृते पदार्थतत्त्वज्ञानाय परमावश्यकता इत्थं विचिन्त्यैव महर्षिणा गौतमेन· स्वातन्त्र्येण हेत्वाभासस्य पदार्थत्वेनोपवर्णनं कृतम्। न्यायदर्शनस्यात्र प्रवक्तृणामाचार्याणांकालकृतिविषये किंचिद् विवेचनं क्रियते।

प्राचीननव्यन्यायतर्कग्रन्थालोडनाकलनाभ्यां प्रसिद्धग्रन्थकृतामित्थं पूर्वापरीभावक्रमं प्रतीमः। पूर्वं महर्षिगौतम आसीत् महर्षि गौतमः आत्रेयः । स च न्यायदर्शनस्य कर्ता। न्यायदर्शनस्य अध्यायपंचकं वर्तते। प्रत्याध्याय– माह्निकद्वयम्। पंचाध्यायेषु सूत्राणां संख्या च सप्तत्रिंशदधिकपंचशतानि (५३७) इति। एनं महर्षिगौतमं गोतमनामानं केचन मन्यन्ते। अन्ये तु– "नैयायिकः अक्षपादः अक्षचरणः प्रशस्तपादः प्रशस्तचरणश्च" इति महर्षेर्गौतमस्यैव नामभिदाः सन्ति इति मन्यन्ते।

महर्षिगौतमानन्तदरं महर्षिः कणादः, ततो महर्षिवात्स्यायनः, ततः प्रशस्तपादाचार्यः, ततः उद्योकराचार्यः, ततः सर्वतन्त्रस्वतन्त्रवाचस्पतिमिश्रः, ततः शिवादित्यमिश्रः, ततः उदयनाचार्यः, ततः श्रीधराचार्यः, ततो बल्लभाचार्यः ततो गंगेशोपाध्यायः, ततो वर्धमानोपाध्यायः ततो वासुदेवभट्टाचार्यसार्वभौमः जयदेवमिश्रश्च (पक्षधरमिरः) ततोरघुनाथतार्किकशिरोमणिः, ततो मथुरानाथतर्कवागीशः ततः कणादापरनामा रघुदेवः ततः शंकरमिश्रः, ततः प्रगल्भः भगीरथठठ्कुरश्च ततो रूचिदत्तः ततः केशवमिश्रः ततो रामभद्रः विश्वनाथन्यायपंचाननश्च ततो रूद्रभट्टाचार्यः अन्नःभट्टश्चेति। तत्र अन्नंभटः कर्णाटक– (कर्नाटक) देशीयः (तैलंगदेशीयोवा) स च काश्यामधीत्य प्रशस्तपादकृतवैशेषिकसूत्रभाष्यस्थग्रन्थान् संक्षेपतो गृहीत्वा तर्कसंग्रहनामानं ग्रन्थं तर्कसंग्रहस्य टीकारूपं तत्त्वचिन्तामणेः रघुनाथतार्किक शिरोमणिकृतदीधितिग्रन्थाच्च सारमुद्धृत्य तर्कदीपिकानामानं च ग्रन्थं रचयामास इति। परमश्रद्धेयानां श्रीमतां गुरूवर्याणां आचार्यप्रवराणां सम्प्रति सम्पूर्णानन्द–संस्कृत–विश्वविद्यलयस्य न्यायवैशेषिकविभागाध्यक्षाणां श्री बशिष्ठत्रिपाठिमहाशयानां कृपयैव एत

पुष्पविकाससाधनम्। आचार्यप्रवराणां श्रीरामपाण्डेयमहोदयानां, स्व.श्रीमतां महाप्रभुलालगोस्वामिनां गुरूवर्याणां वात्सल्येन यदुपलब्धं तदेव "हेत्वाभासविमर्श:" इति ग्रन्थे सन्निवेशितमिति तेषां वच: स्मारं स्मारमेवेतदामुखाद्विरमति।

अस्यग्रन्थस्य सम्पादने राष्ट्रियसंस्कृत–संस्थानस्य वरिष्ठानुसंधान–सहायकपदमलंकुर्वतां श्रीमतां श्रीवत्समहाशयानां साहाय्यं वचसाप्रकाशनाक्षमम्। तत्प्रोत्साहनादेवैतस्य प्रकाशनं क्रियतेऽस्माभिरिति सादरे प्रणमामि।

श्रीमतां संगणक केन्द्रस्य "सिस्टम मैनेजर" इत्याख्यपदमलंकुर्वतां श्रीविजयकुमारमणि त्रिपाठिमहाशयानाम् सहयोगमविस्मरणीयमेव। वाराणसीस्थ संगणक यन्त्रालयाधिपतीनां श्रीमतां कौशल कुमार पाण्डेयानाम् श्रीमतां गंगेश मिश्राणां शेखर श्रीवास्तवानां च सहयोगस्तु वचसा प्रकाशनाक्षम: एवेतिइत्यलं विस्तरभयेन।

दिनांक : २२/०४/१९९५

उमेशराम त्रिपाठी
व्याख्याता
सर्वदर्शनविभागस्य
श्री रणवीरकेन्द्रीयसंस्कृतविद्यापीठस्य,
जम्बूस्थस्य–४

# विषयानुक्रमणिका

# भूमिका

## अथहेत्वाभासविमर्शः

विश्वसाहित्ये संस्कृतसाहित्यमतिप्राचीनं सर्वांगपूर्णं क्रमप्राप्तविकासञ्चेति सर्वजनानुभवसिद्धम्। साहित्यस्यास्य बहुषु अङ्गेषु अध्यात्मसिद्धान्तपरोभागः प्रधानतम इति साहित्यमर्मज्ञाः विचक्षणाश्शास्त्रज्ञाश्च। सोऽयं सहस्राधिकैः प्रकाशितैः ग्रन्थैः पूर्णो विकसितश्च विराजते।

अध्यात्मसिद्धान्तपरो भागः दर्शनशब्देन भारतीयसम्प्रदाये व्यवहृतः प्रयुक्तश्च दृश्यते। दृश्यते अनेन इति दर्शनमिति व्युत्पत्तेः। सरहस्यस्य निगूढ़तमस्य प्रपञ्चस्य तत्त्वमनेनैव दृश्यते तस्यान्वर्थता। सर्वस्यास्य आत्मानात्मभेदभिन्नस्य प्रपञ्चस्य अन्यथाख्यातिरूपं ज्ञानं दर्शनशास्त्रेणैव भवितुमर्हति नान्यथा। शास्ति च त्रायते च इति शास्त्रम्, शंसति च शास्त्रमिति व्युत्पत्तेः।

"यच्छास्ति च क्लेशरिपूनशेषान् सन्त्रायते दुर्गतितो भवाच्च।
तच्छासनात् त्राणगुणाच्च शास्त्रम्" ।इति।।

दर्शनं नामवस्तुतत्त्वनिरूपकोऽभ्यर्हितपुरुषप्रणीतशब्दसन्दर्भविशेषः अथवा तत्त्वज्ञानसाधनं शास्त्रमिति।

सर्वेषां दर्शनानां इदमेवपरमं प्रयोजनम् यत् रागादि दोषवर्जनम्। "शमार्थं सर्वशास्त्राणि विहितानि मनीषिभिः इति।।

नानादर्शनसारग्राहिणस्तु तादृशाभिमानविधुराः प्रायः शान्ताः भवन्ति। ततश्च य एव सर्वशास्त्रज्ञस्तस्य शान्तं मनस्सदा इति वचनमनुसृत्य मनसश्शान्तिरेव सर्वदर्शनानां प्रयोजनं भवतीति। तदिदं दर्शनं दृष्टादृष्टवादभेदात् द्विविधम्। तत्र दृष्टवादिदर्शनं तु दृष्टप्रपञ्चस्यैव अस्तित्वबुद्धिं स्वीकरोति। अदृष्टप्रपञ्चस्य आमुष्मिकपरलोकादिशब्दव्यवहृतस्य नास्तित्वं स्वीकरोतीति कारणेन नास्तिकदर्शनमिति प्रसिद्धम्। अदृष्टवादिदर्शनं तु दृष्टात्परयोरात्मानात्मनोरस्तित्वं

स्वीकरोति इति आस्तिक नाम्ना प्रसिद्धम्। आस्तिकशब्दः ईश्वरास्तित्ववादिनिप्रसिद्धः नास्तिकशब्दश्च ईश्वरनास्तित्ववादिनि प्रसिद्धरिति तन्न। पूर्वमीमांसैकदेशिनः अपूर्वाणामेव फलदातृत्वं न तु तद्भिन्नस्य ईश्वरस्येति ईश्वरमनङ्गीकुर्वाणा अपि आस्तिक शब्द व्यवहारानर्हा भवेयुः।

वस्तुतः "नास्तिको वेदनिन्दक": इतिवाक्यं प्रमाणमिति स्वीकृत्य वेदप्रामाण्यस्वीकर्त्तारः आस्तिकाः। वेदाप्रामाण्यस्वीकर्त्तारश्च नास्तिका इति स्वीकर्त्तव्यम्। एवं सति आस्तिकदर्शनेषु न्यायवैशेषिकसाङ्ख्ययोग मीमांसा–वेदान्तसंज्ञकानि षड्दर्शनानि अन्तर्भवन्ति। नास्तिकदर्शनेषु अवैदिकदर्शनेष्विति प्रसिद्धेषु चार्वाकबौद्धजैनदर्शनानि अन्तर्भवन्ति। आस्तिक दर्शनेष्वाद्यः न्याय एव। सामान्यतः न्यायशब्दः नियमेन ईयते इति व्युत्पत्त्या नियमयुक्ते व्यवहारे प्रयुज्यते। अत एव न्यायालयः न्यायकर्त्ता इत्यादिव्यवहारोऽपि दृश्यते। एवं प्रसिद्धदृष्टान्तेन सदृशार्थेन न्यायशब्दस्य प्रयोगोदृश्यते। स्थालीपुलाकन्यायः, काकाक्षिगोलकन्यायः, देहलीदीपन्यायः, काकतालीयन्यायः इत्यादिषु। परं शास्त्रग्रन्थेषु नीयतेप्राप्यते विवक्षितार्थसिद्धिरनेनेति व्युत्पत्त्या येन प्रतिपाद्यविषयस्य सिद्धिर्भवति, येन सिद्धान्तः साधितो भवति स एव न्याय इत्युच्यते। स च प्रतिज्ञाहेतूदाहरणोपनयनिगमनात्मकः पञ्चावयवयुक्तोवाक्यसमूह एवेति स एव न्याय इति कथ्यते। "समस्तप्रमाणादर्थाधिगतिर्न्यायः" इति न्यायवार्तिककारः। न्यायभाष्ये "प्रमाणैरर्थपरीक्षणंन्यायः" इति वर्णितम्। तथाच न्यायशब्दः यत्र प्रमाणसाहाय्येनवस्तुविचारः क्रियते तत्र सर्वत्र प्रयोक्तुं शक्यत इतिफलितम्।

अत एव मीमांसाशास्त्रग्रन्थेष्वपि न्यायशब्दः प्रयुक्तो विद्यते तथा मीमांसान्यायप्रकाशः, न्यायमाला इत्यादिषु न्यायशब्दस्य वेदार्थनिर्णयसाधन–युक्तिसङ्गतविवेचनात्मकः अधिकरणात्मकश्च पदार्थः। परन्तु न्यायशब्दः गौतमीयदर्शने रूढो भूत्वा गौतमसूत्रभाष्यवार्तिकवृत्ति–तत्सम्बद्धेषु च ग्रन्थेषु प्रयुज्यते। अत्र कारणं गौतमसूत्राणां तत्परम्परागतग्रन्थानाञ्च प्रधानतया अनुमानतदवयवविषयिणी प्रवृत्तिरेव। तस्मात् ते एव न्यायशास्त्रशब्देन व्यवह्रियते।

न्यायशास्त्रमिदंन्यायविस्तरः, न्यायदर्शनम्, न्यायविद्या, गौतमीयविद्या, अक्षपाददर्शनम्, तत्त्वशास्त्रम्, हेतुविद्यावादार्थः, तर्कविद्येत्यादिभिर्नामभिः व्यवहृतमपि आन्वीक्षिकी प्रमाणविद्येति समाख्ये सुतरां शोभते। आन्वीक्षिक्यां न्यायानां न्यायसम्बद्धानां विषयान्तराणाञ्च प्रतिपादनात् सा न्यायशास्त्रनाम्ना व्यवह्रियते। न्यायशास्त्रस्यप्रवृत्तिः द्विधा दृश्यते। प्रमेयप्रधाना प्रमाणप्रधाना चेति।

येषु ग्रन्थेषु प्रमेयविचाराणां प्राधान्यं भवति ते प्रमेयप्रधानाः। येषु ग्रन्थेषु प्रमाणविचाराणां प्राधान्यं भवति ते प्रमाणप्रधानाः। गङ्गेशोपाध्यायादारब्धेषु सर्वेषु ग्रन्थेषु प्रमाणप्राधान्यदर्शनात् ते प्रमाणप्रधानग्रन्थाः यथा तत्त्वचिन्तामणिः, तत्त्वचिन्तामणिदीधितिः, तत्त्वचिन्तामणिदीधितिगादाधरी, जागदीशीचेत्यादयः। तथाच प्रमेयप्रधानाः ग्रन्थाः प्राचीनन्यायशास्त्रे, प्रमाणप्रधानाः ग्रन्थाः नव्यन्यायशास्त्रे च परिगणनार्हा भवन्ति।

प्राचीननव्यन्याययोर्न केवलं विचाराणां प्राधान्येन भेदः परं भाषायां शैल्याञ्च भेदो दृश्यते। प्राचीनन्याये प्रकारता विशेष्यता संसर्गता प्रतियोगिता—अनुयोगिता—अवच्छेदकता निरूप्यता निरूपकता प्रभृतयः शब्दाः नैवाधिकं प्रयुक्ता दृश्यन्ते। परं नव्यन्याये एतेषां शब्दानां प्रयोगः सर्वत्रैवावलोक्यते। प्राचीनन्यायशास्त्रस्य शैली सरलासुगमा आडम्बररहिता च। प्रायोगिकशैल्यां रचितास्ते ग्रन्थाः संक्षिप्ताः सांकेतिकाश्च दृश्यन्ते। अनुमानप्रयोगाश्च पंचावयवादिवाक्यैः अप्रयुक्ता विद्यन्ते। तस्मादस्यानुमानत्वमस्पष्टं। भवति परं नव्यन्यायशास्त्रस्य शैली परिमार्जिता आडम्बरपूर्णा स्वरूपतो दुर्गमापि शैली सौन्दर्यादर्थतः स्पष्टा भवति। पारिभाषिकशब्दानां परिचये सति प्रतिपाद्यार्थावबोधे भाषया शैल्या वा काठिन्यं नानुभूयते। नव्यन्यायशास्त्रे विषयप्रतिपादनं सूक्ष्मातिसूक्ष्मविचारप्रधानं सर्वाङ्गस्पर्शिभवति।

षोडशपदार्थानां तत्त्वज्ञानात् निःश्रेयसाधिगम एव न्यायदर्शनस्य प्रतिपाद्योविषयः। निःश्रेयसो नाम मोक्षः। सः प्रमाणादीनां षोडशपदार्थानां तत्त्वज्ञानेन विना न प्राप्तुं शक्यः।

गौतमीयप्रथमसूत्रन्तु—

"प्रमाणप्रमेयसंशयप्रयोजनदृष्ठान्तसिद्धान्तावयवतर्क निर्णयवादजल्प—वितण्डाहेत्वाभासच्छलजाति निग्रहस्थानानांतत्त्वज्ञानान्निश्रेयसाधिगम:"।

ईश्वीयद्वादशशतकान्तं न्यायशास्त्रसाहित्यं सूत्रभाष्यव्याख्यानपद्धत्यां विकसितमासीत्। परं त्रयोदशशतकादारभ्य न्यायशास्त्रे काचननूतना सरणिराविरभूत्। तस्यां शरण्यां सूत्रव्याख्यानपद्धतेरप्राधान्यं सूत्रभाष्या—भिमतविषयाणां विचारस्यैव प्राधान्यं दृश्यते। तत्रापि प्रमेयविचारस्य गौणत्वं, प्रमाणविचारस्यैव मुख्यत्वं च दृश्यते। विषयविवेचनावसरे प्राक्तन्मार्गे परिष्कारमाधातुं सम्भावितानां सर्वाषामाशंकानां विध्वंसनाय च या विवेचनसरणि: समादृता सा प्राचीनग्रन्थेभ्योऽपि नवीना दृश्यते। प्राचीनग्रन्थेषु विस्तरेणोपपादितस्य विषयस्य सपरिष्कारं मितेन वचसा प्रतिपादनमपि नवीनं दृश्यते। अत एव त्रयोदशकालादारब्धानां न्यायग्रन्थानां नव्यन्यायग्रन्थ व्यपदेशोऽपि युज्यते। तेषु नव्यन्यायग्रन्थेषु सर्वप्रथमनिर्देशार्हो ग्रन्थ: "तत्त्वचिन्तामणि" रेव। मीमासकादे: विशिष्यप्रभाकरमीमांसकस्य प्राचीननैयायिकानाञ्च मतविशेषनिरसनपूर्वकं प्रमाणचतुष्टयस्य तत्त्वं व्युत्पादयन् द्वादशसहस्रग्रन्थपरिमितोऽयं ग्रन्थ: अन्वर्थनामा गङ्गेशोपाध्यायेन निर्मित: नव्यन्यायशास्त्रस्यादिमो विराजते। ग्रन्थस्यास्य प्रत्यक्षखण्डे प्रथमत: मङ्गलवाद: प्रस्तुत:। यथा चिन्तामणिकारा: —

"सिद्धान्तस्त्वारब्धकर्मसमाप्तौ मंङ्गलं नाङ्गम्, न वा प्रधानम्, अहेतुत्वात्" किन्तु प्रायश्चित्तवत् प्रधानं विघ्नध्वंस: फलम्। आरब्धकर्म निर्वाहे बिघ्नो माभूदिति कामनया तदनुष्ठानात् विघ्नसंशये निश्चये वा शिष्टानां तदाचरणाद् विघ्नाभावस्याकाङ्क्षितत्वाच्च। यदि च निर्विघ्नं समाप्यतामिति कामनया तदाचरणम्, तदापि "नागृहीतविशेषणा" न्यायेनाहं "स्वर्गीस्याम्" इत्यत्र स्वर्ग इव विघ्नाभाव एव फलम्, न समाप्ति:, उभयतो व्यभिचारात्। समाप्तिस्तु विघ्नरुपप्रतिबन्धकाभावे सति लोकावगतस्वकारणादेव। प्रचिताप्रचितदेवता—स्तुत्यादिसाङ्गमङ्गलात् प्रत्येकं विघ्नध्वंसो भवत्येव"।

नवीनमते मङ्गलस्य विघ्नध्वंसकारणत्वं प्राचीनमते च समाप्तिकारणत्वम्। अत्र नास्तिकाः मङ्गलं न विघ्नध्वसं प्रति कारणं न वा समाप्तिं प्रति निष्फलत्वादर्थात् मङ्गलमयुक्तं निष्फलत्वाज्जलताडनवत्। अयुक्त्वं बलदनिष्टानुबन्धित्वं, भ्रममूलकेच्छाजन्यप्रवृत्तिविधेयत्वंवा। फलंद्विविधं मुख्यमानुषंगिकंच, स्वविधेयकप्रवृत्तिप्रयोजनकोत्कटेच्छाविषयीभूतं स्वस्यमुख्यं फलं, तादृशानुत्कटेच्छाविषयीभूतं स्वस्यानुषङ्गकं फलम्, उत्कटत्वानुत्कटत्वे जातिविशेषाविच्छानिष्ठौ, तथा च निष्फलत्वमत्र स्वविधेयकप्रवृत्तिप्रयोजकोत्क–टेच्छाविषयत्वावच्छिन्नजनकत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभाववत्त्वम्। न च निष्फलत्वमसिद्धमिति वाच्यम्। तदीययावत्फलविशेषशून्यत्वेन हेतुना निष्फलत्वसाधनात्। तथाच मङ्गलं निष्फलं फलविशेषशून्यत्वात्। न च ज्योतिष्टोमे स्वर्गफलके निष्फलत्वात्मकसाध्याभाववति पुत्रादिरूपफलविशेषशून्यत्वस्य सत्त्वात् "साध्याभाववद्वृत्तिहेतुरूपो व्यभिचार इति वाच्यम् मङ्गलं निष्फलं यावत्फल–विशेषशून्यत्वात्। तथाच यावद्विशेषाभावस्य सामान्याभावव्याप्यत्वान्नोक्त–व्यभिचारः। न च यावत्फलविशेषशून्यत्वमसिद्धम् इति वाच्यम्। मङ्गलंयावत्फलविशेषशून्यं स्वाधिकरणवृत्यभावप्रतियोगिकार्यकत्वे सति स्वाभाववद्वृत्तिकार्यकत्वादित्यनेन तत्साधनात्। कारणसत्त्वे कार्यसत्त्वमन्वय–सहचारः कारणाभावे कार्याभावो व्यतिरेकसहचारः। एवंचेत् कारणसत्त्वे कार्याभावोऽन्वयव्यभिचारः कारणसमानाधिकरणात्यन्ताभावप्रतियोगिता–च्छेदकधर्मवत् कार्यम्। कारणाभावे कार्यसत्त्वं व्यतिरेकव्यभिचारः, कारणाभाववद् वृत्तिकार्यम्। नास्तिकग्रन्थेषु मङ्गलासत्त्वेऽपि कार्यस्य समाप्तेः सत्त्वात् व्यतिरेकव्यभिचारः। एवं कादम्बर्यां बाणभट्टेन मङ्गलंकृत्वा आरम्भिताया अपि मरणोत्तरं तत्पुत्रेण तत्समाप्तिः कृता न तु बाणभट्टेन, अतस्तत्प्रणेतृपुरुषे मङ्गलसत्त्वेऽपि समाप्त्यभावसत्त्वादन्वयव्यभिचारः। तथाच मङ्गलमयुक्तमिष्ट–साधनत्वाभावात् चैत्यवन्दनादिवत्। इति चेन्न मङ्गलं सफलमविगीतशिष्टाचार–विषयत्वात्। सफलत्वमत्र बलवदनिष्टाननुबन्धित्वरूपम्। हेतौ अविगीतत्वं बलवदनिष्टाननुबन्धित्वम्, शिष्टाचारविषयत्वं चेष्टसाधनत्वप्रकारकभ्रमशून्य–

समवेतकृतिविधेयत्वम्। तथाच मङ्गलं बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनतावत् बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वप्रकारकभ्रमशून्यसमवेतकृतिविधेयत्वात्'। श्येनेनाऽभिचरन्यजेतेति श्रुत्या "श्येन' यागस्य शत्रुनाशकत्वप्रतिपादनेन श्येनयागकर्तुः "इष्टसाधनत्वप्रकारकभ्रमशून्यत्वरूपस्य शिष्टत्वस्य सत्त्वेन तादृशपुरुषसमवेतकृतिविधेयत्वरूपहेतुमति श्येनयागे बलवदनिष्टाननुबन्धित्ववि–शिष्टेष्टसाधनत्वरूपसाध्याभावेन व्यभिचारः स्यात्, अतस्तद् वारणाय हेतोरविगीतत्वं विशेषणम्। तथाच श्येनयागस्य नरकसाधनत्वाद्–बलवदनिष्टानुबन्धित्वान्न व्यभिचारः। बलवदनिष्टाननुबन्धित्वेसतिकृतिविधेय–त्वरुपहेतुमति व्युत्क्रमेणकृतदर्शादौ निरुक्तसाध्याभावाद् व्यभिचारः। तद्वारणाय शिष्टसमवेत्वम्। विषयत्वस्य फलेऽपि सत्त्वेन फले व्यभिचारवारणाय विषयत्वं विहाय विधेयत्वं हेतावुक्तम्। यत्र कादम्बर्यादिग्रन्थे मङ्गले कृते सत्यपि समाप्तिर्न दृश्यते तत्र बलवत्तरो विघ्नो विघ्नप्राचुर्यंवा ज्ञेयम्। यत्र नास्तिकग्रन्थे मङ्गलं न दृश्यते। तत्रापि मङ्गलं पूर्वजन्मनि तेन कृतमिति समाप्तिरूपकार्येणानुमीयते। यथा अयं मङ्गलाश्रयः समाप्तग्रन्थकर्तृत्वादास्तिकवदित्यनुमानेन "मङ्गलव्याप्य–समाप्तग्रन्थकर्तृत्ववानयमिति परामर्शात् एतज्जन्मीयमङ्गलबाधज्ञानसहितात् व्यापकतानवच्छेकजन्मान्तरीयमङ्गलत्वेन रूपेण मङ्गलं सिद्धयति।

न च मङ्गलंविघ्नध्वंसविशेषे कारणमिति नवीनाः तन्न विनायकस्तवपाठादिजन्यविघ्नध्वंसे व्यभिचारादिति वाच्यम्। मङ्गलमिव विघ्न ध्वंसविशेषे च विनायकस्तवपाठादिःकारणम्। तथाच मङ्गलस्य स्वसामानाधिकरण्य स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वसम्बन्धेन मङ्गलविशिष्टविघ्नध्वंसत्वं विजातीयविघ्नध्वंसत्वं वा कार्यतावच्छेकमतो न पूवोक्तव्यभिचारः। इत्थं च नास्तिकादीनां ग्रन्थेषु जन्मान्तरीयमङ्गलजन्यदुरितध्वंसः स्वतःसिद्धविघ्नात्यन्ताभावो वास्तीति न व्यभिचारः। एवं रीत्या चिन्तामणिकारेण मङ्गलस्य प्रयोजनं ग्रन्थादौ प्रतिपादितम्।

मङ्गलस्य प्रयोजननिरूपणानन्तरं प्रामाण्यवादः इति विषयमधिकृत्य बौद्ध– मीमांसकमतनिरसनपूर्वकं स्वमतं स्थापितम्।

यथा—"अंथ जगदेवदु:खपंकनिमग्नमुद्दिधीर्षुरष्टादशविद्यास्थानेष्वभ्यर्हिततमा—मान्वीक्षिकीं परमकारुणिको मुनि: प्रणिनाय। तत्र प्रेक्षावत् प्रवृत्यर्थं प्रमाणादिषोडशपदार्थानांतत्त्वज्ञानान्नि:श्रेयसाधिगम:" इत्यादावसूत्रयत्। तेष्वपि प्रमाणाधीना सर्वेषां व्यवस्थितिरिति प्रमाणतत्त्वमत्र विविच्यते ननु प्रमाणादीनां तत्त्वं प्रतिपादयच्छास्त्रं परम्परया नि:श्रेयसेन सम्बद्ध्यते। तद्धि प्रमाणतत्त्वावधारणाधीनम्। तच्च स्वत: परतो वा न सम्भवति वक्ष्यमाणदूषणगणग्रासात्"।

मङ्गलस्य सफलत्वं निरुप्य मोक्षसाधनीभूततत्त्वज्ञानरूपफलवदान्विक्षिकी शास्त्रे प्रामाण्याधीनैव प्रमाणतत्त्वावधारणं। प्रमाणतत्त्वावधारणात् सर्वेषां षोडशपदार्थानां तत्त्वज्ञानं तस्मात् नि:श्रेयसाधिगम:। अत: प्रमात्वस्य स्वतस्त्वं मीमांसकैरभ्युपगच्छन्ति। नैयायिकै: प्रमात्वं न स्वत: ग्राह्यमिति वदन्ति यत्तोहि यदि प्रामाण्यं स्वतोग्राह्यं स्यात् तदा अनभ्यासदशायामर्थात् प्रथमजलज्ञानोत्तरदशायाम् दुरावलोकिते जले सति "जलज्ञानं प्रमा नवा इति अनुभवसिद्ध: प्रमात्वसंशयो नोपपद्येत, अनुव्यवसायेन प्रामाण्यस्य निश्चितत्वात्, तस्मात् ज्ञानप्रामाण्यमनुमेयत्वात् परत एव। मीमांसकानां पक्षमुपस्थापयन् आह चिन्तामणिकार:

"ननु स्वत एवास्तु तन्निरुपणम्। तथाहि तत्र विप्रतिपत्तय:। ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यं न वा। तज्ज्ञानविषय—कज्ञानाजन्यज्ञानग्राह्यं न वा। परत: पक्षे ज्ञात एव ज्ञाने प्रामाण्यग्रह:। स्वतस्त्वे प्रामाण्यवत एव ज्ञानस्य ग्रहात्। स्वाश्रयग्राहकेण गृह्यत एव न वा। स्वाश्रयेण गृह्यत एव न वेति प्रत्येकमेव वा"। इति।

मीमांसकमतमुत्थाप्य तन्निराकरणार्थं ननु स्वत एवास्तु तन्निरुपणम्" इत्येवं चिन्तामणिकार: प्रतिपादयति। स्वत एव अत्रस्वकीयेभ्य एव, स्वजनकसामग्री स्वजन्यस्वप्रत्यक्षसामग्री स्वजन्यज्ञाततताहेतुकानुमिति—सामग्र्यन्यतमेभ्य:। तन्निरुपणम् अत्र स्वस्मिन्प्रामाण्यनिरुपणम्। अत्र स्वस्यैव

स्वप्रामाण्यविषयकतया स्वजनकसामग्र्ये स्वनिष्ठप्रामाण्यनिश्चायिका इति गुरवः। स्वोत्तरवर्तिस्वविषयकलौकिकप्रत्यक्षस्य स्वनिष्ठप्रामाण्यविषयकतया स्वजन्यस्वविषयकप्रत्यक्षसामग्री स्वनिष्ठप्रामाण्यनिश्चायिका इति मिश्राः। ज्ञानस्यातीन्द्रियतया प्रत्यक्षाऽसम्भवेन स्वजन्यज्ञाततालिङ्गकानुमितिसामग्री स्वनिष्ठप्रामाण्यनिश्चायिका इति भट्टाः। ज्ञातता च ज्ञात इति प्रतीतिसिद्धः ज्ञानजन्यः विषयसमवेतः प्राकट्यापरनामातिरिक्तः पदार्थविशेषः। संवादिप्रवृत्तिजनकत्वादिहेतुना प्रामाण्यग्रह इति तु नैयायिकाः। तद्धेतुकप्रामाण्यग्रहस्तु सकलमीमांसकानामपि सम्मतः। ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्री ग्राह्यं न वेत्यत्र विधिकोटिः मीमांसकानां, निषेधकोटिश्च नैयायिकानाम्। अत्र प्रामाण्यमात्रस्य पक्षत्वे इच्छादिवृत्तितद्वतितत्प्रकारकत्वादिरूपप्रामाण्येऽंशतो बाध इति पक्षे ज्ञानपदम्। तथा च ज्ञाननिष्ठप्रामाण्यस्य पक्षत्वान्न बाधः। यद्यपि तस्य पक्षत्वेऽपि प्रशब्दसमभिव्याहृतेन माधातुना तद्वतितत्प्रकारकत्वादिरूपप्रकर्षविशेषविशिष्टं ज्ञानं प्रत्यायते, भावल्युडुत्तरतद्धितप्रत्ययेन तादृशज्ञानत्वं प्रत्याय्यते इति प्रामाण्यपदेनैव तद्वति तत्प्रकारकत्वविशिष्टज्ञानत्वलाभादिच्छादिवृत्ति-तद्वतितत्प्रकारकत्वे बाधाभावेन ज्ञानपदमत्र व्यर्थम्, तथापि तद्वति तत् प्रकारकत्वविशिष्टज्ञानत्वमत्र न प्रामाण्यपदार्थः ज्ञानत्वभागस्य व्यर्थत्वात्। तद्वति तत्प्रकारकत्वस्य तत्पदार्थभेदेने ज्ञानभेदेने च भिन्नतया तेनापि तद्वति तत्प्रकारकत्वेन विशिष्टस्य ज्ञानत्वस्य यावज्ज्ञानग्राहकसामग्रीग्राह्यत्वाभावेन बाधापत्त्या साध्ये ज्ञानपदस्य तज्ज्ञानपरत्वावश्यकत्वेन ज्ञानत्वांशोपादानेऽपि ज्ञानान्तरवृत्ति तद्वति तत्प्रकारकत्वमादाय अंशतो बाधतादवस्थ्यम्। तन्मतेऽप्यनुव्यवसायादौ तद्वतितत्प्रकारकत्वज्ञानत्वयोः स्वातन्त्र्येण विशिष्टे वैशिष्ट्यमितिन्यायेन ज्ञाने प्रकारतया तद्वतितत्प्रकारकत्वस्य वैशिष्टयसम्बन्धेन ज्ञानत्वेऽप्रकारकत्वात् बाधापत्तेश्च। ज्ञानत्वघटितप्रामाण्यस्यपक्षत्वे विवक्षणीयेषु सर्वेष्वेव विशेषणेषु ज्ञानत्वघटितप्रामाण्यस्यैव निवेशनीयतया गौरवापत्तश्चे। किन्तु प्रसमभिव्याहृतमाधातोस्तद्वति तत्प्रकारकतया तद्वतितत्प्रकारकत्वमात्रं

तदर्थः। तथाच इच्छादिवृत्तिकतद्वतितत्प्रकारकत्वे ज्ञानान्तरवृत्तितद्वतितत्प्रकारकत्वे चांशतो बाधवारणाय ज्ञानपदं तज्ज्ञाननिष्ठार्थकम्। तथा च तज्ज्ञाननिष्ठघटत्ववति घटत्वप्रकारकत्वं यावत्तज्ज्ञानग्राहकसामग्रीग्राह्या नवा, इत्यादिक्रमेण तत्तज्ज्ञानस्य तत्तत्प्रामाण्यमादाय विप्रतिपत्तिः। यदि च ज्ञानव्यक्तिभेदेऽपि घटत्ववति घटत्वप्रकारकत्वादेर्न भेदस्तदा ज्ञानपदं तज्ज्ञानपरमपि न, किन्तु सामान्यतः ज्ञानवृत्तिघटत्ववति घटत्वप्रकारकत्वादिनैव पक्षत्वम्, इच्छादिवृत्तिघटत्ववतिघटत्वप्रकारकत्वादौ बाधवारणाय ज्ञानवृत्तित्वप्रवेशः, घटत्ववतिघटत्वप्रकारत्वादेरेकस्यैव ज्ञानेच्छादिसकलमसाधारणत्वे तु ज्ञानवृत्तित्वमपि नोपादेयम्। घटत्ववति घटत्वप्रकारकत्वादिकमेव पक्षः, पक्षे ज्ञानपदं तु प्रामाण्यपदेन क्वचित् प्रमाकरणत्वस्यापि बोधनात्, घटत्ववति घटत्वप्रकारकत्वरूपप्रामाण्ये प्रामाण्यपदस्य तात्पर्यग्राहकं चित्रगुरित्यादौ चित्रादिपदमिव। साध्ये ज्ञानपदं घटत्ववति घटत्वप्रकारकत्वाद्याश्रयज्ञानपरम्, अन्यथा घटत्ववति घटत्वप्रकारकत्वादेः पटादिज्ञानग्राहकसामग्रीग्राह्यत्वाभावेन बाधापत्तेः। तथाच तज्ज्ञानवृत्तिघटत्ववतिघटत्वप्रकारकत्वंवा यावत्स्वाश्रय ज्ञानग्राहकसामग्री ग्राह्यं न वेत्यादि विप्रतिपत्तिशरीरम्, स्वपदं पक्षीभूतघटत्ववति घटत्वप्रकारकत्वादिपरम्।

न च ज्ञानपदसमभिव्याहृतप्रामाण्यपदेनापिक्वचित् व्याप्तिज्ञानादिवृत्तिप्रमाकरणत्वादिबोधनात् कुतस्तस्य तादृशप्रमात्वतात्पर्यग्राहकमिति वाच्यम्। सामान्यतः ज्ञानपदसमभिव्याहारस्य तादृशप्रमात्वतात्पर्यकत्वव्यभिचारेऽपि व्यभिचारास्फूर्तिदशायां तत्तत्पदत्वेन वा तादृशप्रमात्वे तात्पर्यग्राहकत्वसम्भवात् अन्यथा चित्रादिपदादेः भोजनादिप्रकरणादेश्चतात्पर्यग्राहकत्वानुपत्तिरिति न काप्यनुपपत्तिः। दीधितिकृतस्तु यावदिति चरमग्रहविशेषणं तथाच तदप्रामाण्याग्राहकतज्ज्ञानग्राहकसामग्रीजन्ययावद्ग्रहविषयः न वा। तदग्राहकात्मादिजन्ययावद्ग्रहविषयत्वाप्रसिद्धेः सामग्रीति। न चैक एव यत्र ज्ञानग्राहकसामग्रीजन्यःग्रहस्तत्रसाध्याप्रसिद्धेर्यावत्त्वमपि दुर्वचमितिवाच्यम्। यावत् पदस्य व्यापकतापरत्वात्। तथाच विषयितासम्बन्धेन तादृशसामग्रीजन्यग्रहत्वव्यापकं न वा। व्यापकत्वञ्च

विषयितासम्बन्धसामान्यावच्छिन्ना या तद्वन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकता तच्छून्यत्वम्। अथ सामग्रीपदस्य यावत् कारणवाचितया तज्ज्ञानग्राहकसामग्रीजन्यग्रहस्यापि उक्तक्रमेणाप्रसिद्धिः।

न च सामग्रीपदं प्रागभावपरम् इति वाच्यम्। प्रागभावस्य परैरनभ्युपगमात् इति चेत् न तज्ज्ञानग्राहकसामग्रीजन्यग्रहत्वपदेन तज्ज्ञानग्रहमात्र वृत्तिकार्यताप्रतियोगिककारणतानिरुपितकार्यताश्रयग्रहत्वस्य विवक्षितत्वात्।

मीमांसकाभिमताभावस्याधिकरणात्मकत्वं निरस्याभावः अतिरिक्तः पदार्थः इति साधितः द्वितीयेऽनुमानखण्डे अनुमितिलक्षणकथनपूर्वकमनुमानस्य प्रामाण्यं स्थापितम्। न्यायसाध्यस्य परार्थानुमानस्यावयवाः प्रतिज्ञाहेतूदाहरणोपनयनिगमनात्मकाः पंचवर्णिताः। अवान्तरभेदभिन्नाः हेत्वाभासाः विचारिताः। स एव मम विमर्शविषयः।

उपमाननिरुपणावसरे मीमांसकजरन्नैयायिकपक्षानाक्षिप्य उपमानस्य प्रमाणता साधिता। शब्दखण्डे वैदिकशब्दानामेव प्रामाण्यमिति वदतां मीमांसकानां मतं व्युदस्य बौद्धवैशेषिकमतनिरासपूवर्कं शब्दप्रामाण्यं निर्णीतम्।

वङ्गदेशीयवासुदेवसार्वभौमान्तेवासी रघुनाथतार्किकशिरोमणिभट्टाचार्यः दीधिति नाम्नीं तत्त्वचिन्तामणिटीकां वितेने। महनीयवृत्तस्य रघुनाथस्यापि जीवनवृत्तं प्राचामाचार्याणामन्येषां वृत्तमिवान्धकाराच्छन्नमेव। केचननवद्वीपबासिनंरघुनाथमिति मन्वते। वङ्गदेशस्य हट्टनामकस्थाने अस्य जन्मस्थानमेव केचन वदन्ति। कश्चिदेनमविवाहितं ब्रूते।

नव्यन्यायशास्त्रञ्च अक्षपादप्रतिपाद्यपदार्थप्रतिपादकतया सर्वशास्त्रो–पकारकतया च सकलजनसमाहतं श्रीमद्भिःगङ्गेशोपाध्यायैर्नव्यन्याय–प्रपञ्चप्रजापतिभिरस्मत्पूज्यपूर्व पुरुषैः विरचितम्।

नव्यन्यायशास्त्रस्य सकलोपकारकत्वम्–

मोहं रुणद्धि विमलीकुरुते च बुद्धिम्।
सूते च संस्कृतपदव्यवहारशक्तिम्।।
शास्त्रान्तराभ्यसनयोग्यतया युनक्ति।
तर्कश्रमो न तनुते कमिहोपकारकम्।।

इत्यादिना सर्वैरेवाचार्यैरङ्गीकृतम्। तथाच न्यायभाष्यकारो वात्स्यायनः–

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।
आश्रयः सर्वधर्माणां शाश्वदान्वीक्षिकीमता।।

तत्र च नव्यन्यायावयवभूतवादिविजयाद्यानुषंगिकफलसहिततत्त्वनिर्णायकस्यास्य हेत्वाभासानां सारभूतं– विवरणं निर्दिश्यते ।

तत्र प्रथमतो मूलकृता गङ्गेशोपाध्यायेन हेतुवदाभासन्ते ये ते हेत्वाभासा इति व्युत्पत्तिबलेन हेत्वाभासशब्दस्य दुष्टहेत्वर्थकतामङ्गीकृत्य हेत्वाभासाः के इति शिष्यजिज्ञासानिवृत्तिफलकं प्रकृतसाध्यज्ञाने प्रमात्वनिश्चयरुपतत्त्व निर्णयप्रयोजकत्वेन प्रतिवादिहेतौ दुष्टत्व प्रदर्शनेन वादिनः स्वस्य विजयो भवतीति विजयप्रयोजकतया च हेत्वाभासनिरुपणं प्रतिज्ञातम्, तदनन्तरं दोषलक्षणं विनादुष्टलक्षणासम्भवात् दोषाणां लक्षणत्रयं प्रतिपादितम्। ततः प्राचीनतार्किक– सम्मतं हेतौ सत्प्रतिपक्षत्वादिव्यवहारविषयत्वं दशाविशेषेत्यादिमूलेन प्रतिपाद्य हेत्वाभासानां न चेत्यादि ग्रन्थेन विभागः कृत इति।

हेत्वाभासशब्दः हेतोराभासा हेत्वाभास इति षष्ठीतत्पुरुषसमासाश्रयणेन हेतुनिष्ठ दोषाभिधायि।

हेतुः हि द्विविधः, सद्धेतुरसद्धेतुश्च तत्र व्याप्तिपक्षधर्मता विशिष्टः आद्यः। व्याप्तिपक्षधर्मतावान् द्वितीयः। स एव दुष्टो हेतुरित्युच्यते।

दुष्टहेतुश्च पञ्चविधः। अनुमानस्थले यः खलु नप्रकृते हेतुः किन्तु हेतु सदृशतया प्रतीयमानः स हेत्वाभासः, हेत्वाभासशब्दस्तु हेतुवदाभासन्ते ये ते

हेत्वाभासाः इति व्युत्पत्तिबलेन दुष्टहेतुपरः, हेतोराभासा हेत्वाभासा इति षष्ठीसमासबलेन च हेत्वधिकरणदोषवाचकः, हेत्वाभासस्य विशेषज्ञानं विना त्रिविधकथायां न कस्याप्यधिकारः।

अत एव महर्षिगौतमः हेत्वाभासपदार्थस्योल्लेखपूर्वकं सव्यभिचार–विरुद्धप्रकरणसमसाध्यसमकालातीताहेत्वाभासाः— इति विभागं कृतवान् अर्थात् सव्यभिचारविरुद्धप्रकरणसमसाध्यसमसूत्रस्थ हेत्वाभासशब्दद्वारा हेत्वाभासस्य सामान्यलक्षणंमपि संसूचितम्। हेतुवदाभासन्ते अर्थात् यः समस्तपदार्थः न खलु हेतुलक्षणाक्रान्तः किन्तु हेतुसदृशतया प्रतीयमानो भवति स हेत्वाभासः इति हेत्वाभासस्य लक्षणं सुबोध्यं भवति।

अत एव न्यायभाष्यकारो भगवान् वात्स्यानः कथयामास "हेतुलक्षणाभावादहेतवो हेतु सामान्यात् हेतुवदाभासमान" इति। अर्थात् हेतुपदार्थस्य सकललक्षणासत्वे यः सकलः पदार्थः यत्रस्थले अहेतुः किन्तु हेतोः सादृश्यवशात् हेतुवत् प्रतीयमानः सः सर्वोऽपि पदार्थः तत्र हेत्वाभासः। महषिगौतममते पक्षसत्वसपक्षसत्वविपक्षासत्वासत्प्रतिपक्षितत्वाबाधितत्वरुपपञ्चधर्म एव हेतु पदार्थस्य सामान्यलक्षणम्। तत्रोक्तपञ्चधर्माणां मध्ये एकैकधर्मस्याभावे पञ्चविध हेत्वाभासो भवति। यथा विपक्षेऽसत्वराहित्ये सव्यभिचारनामा हेत्वाभासः, सपक्षसत्वाभावे विरुद्धनामकोहेत्वाभासः असत्प्रतिपक्षत्वाभावे प्रकरणसमः, पक्षसत्वाभावे साध्यसमः, अबाधितत्वाभावे कालातीतनामको हेत्वाभासः। तथा चोक्तं तार्किकरक्षायां वरदराजेन—

हेतोः केनापि रुपेण रहिताः कैश्चिदन्विताः।
हेत्वाभासाः पञ्चधा ते गौतमेन प्रकीर्तिताः।।

दुत्ष्टत्वञ्च तु दोषवत्वम्, हेतुनिष्ठदोषाश्चा व्यभिचारविंरोधसत्प्रति–पक्षाऽसिद्धिबाधाः। सत्प्रतिपक्षशब्दश्च संचासौ प्रतिपक्षश्चेति व्युत्पत्त्या हेतुदोषपरः। सत्प्रतिपक्षो यस्मिन्निति व्युत्पत्त्या दुष्टहेतुपरः। अयं हेतुः सत्प्रतिपक्षित शब्देनापि व्यवहृयते।

तत्रावान्तरजिज्ञासां प्रति सामान्यधर्मज्ञानस्य कारणतया हेत्वाभास–सामान्यलक्षणं कृतं मूलकारैः। तच्चानुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वम्। तदर्थश्च "दोषज्ञानस्य प्रतिबन्धकत्वमते" अनुमितौ प्रतिबन्धकं यद्‌यथार्थज्ञानंतद्विषयत्वम् अनुमितिपदेन च पक्षः साध्यवान् साध्यव्याप्यहेतुमांश्च इति समूहालम्बनरूपानुमिति–ग्रहया। बाधसत्प्रतिपक्षसंग्रहायसाध्यवानिति। व्यभिचारिसंग्रहाय साध्यव्याप्यहेतु–मानिति एवञ्च ह्रदो वह्निमानित्यत्र वहन्यभाववद् ह्रदे लक्षणसमन्वयः।

तथाहि अनुमितिः ह्रदो वह्निमान् वह्निंव्याप्यधूमावांश्चेति समूहालम्बनरूपा तत्प्रतिबन्धकं यद् वह्न्यभाववान् ह्रद इति यथार्थज्ञानं तद्विषयत्वस्य बह्न्यभाववद् ह्रदे सत्वात्।

तथाच प्रकृतपक्षतावच्छेदकावच्छिन्न विशेष्यता निरुपित प्रकृत–साध्यतावच्छेदकसम्बंन्धावच्छिन्न साध्यतावच्छेदकावच्छिन्न प्रकारता शालि अथ च प्रकृत साध्यतावच्छेदकावच्छिन्न निरुपित व्याप्तिविशिष्ट प्रकृत हेतुतावच्छेदकावच्छिन्नप्रकारताशाल्यनुमितित्वव्यापकप्रतिबध्यता निरुपित प्रतिबन्धकता शालियथार्थज्ञानविषयत्वम्।

प्रतिबन्धकत्वञ्च कारणीभूताभावप्रतियोगित्वरूपम्। प्रतिबन्धकाभावस्य कार्यं प्रति कारणतया कारणीभूतो यो बाधादिनिश्चयाभावः तत्प्रतियोगित्वं बाधादिनिश्चयस्य अस्त्येव। प्रतिबन्धकाश्च व्यभिचारादिनिश्चयाःतद्विषयोदोषः। स च साध्याभाववद् वृत्तिहेत्वादिरुपः। हेतौ दोषवत्त्वञ्च स्वज्ञानविषयप्रकृत–हेतुतावच्छेदकवत्त्वसम्बन्धेन ज्ञेयम्।

प्रतिबध्यप्रतिबन्धकभावश्च यथा तद्वत्ता बुद्धिं प्रति तदभाववत्तानिश्चयस्य तदभावव्याप्यवत्तानिश्चयस्य च प्रतिबन्धकत्वम्। अत्र प्रतिवध्यतावच्छेदककोटौ लौकिकसन्निकर्षाऽजन्यत्वं दोषविशेषाऽजन्यत्वं च निवेशनीयम। प्रतिबध्यतावच्छेदकन्तु "संशयनिश्चयसाधारणतद्वत्ताबुद्धित्वम्। एवं प्रतिबन्धकतावच्छेदककोटौ अनाहार्याऽप्रामाण्यज्ञानानास्कन्दितनिश्चयत्वं निवेशनीयम्।

तथाच लौकिकसन्निकर्षाऽजन्यदोषविशेषाजन्य तद्धर्मावच्छिन्न विशेष्यता निरुपिततत्सम्बन्धावच्छिन्न तद्धर्मावच्छिन्न प्रकारताशालि बुद्धिं प्रति तद्धर्मावच्छिन्नविशेष्यता निरूपिततत्सम्बन्धावच्छिन्न तद्धर्मावच्छिन्न प्रतियोगिताकाभाववत्ता अनाहार्याऽप्रामाण्यज्ञानानास्कन्दित'' निश्चयः, तादृशाभावव्याप्यवत्तानिश्चयश्च प्रतिबन्धकमिति फलितम्।

प्रतिबध्यताप्रतिबन्धकतासम्बन्धश्च समवायः।

अनुमिति प्रतिबन्धकयथार्थज्ञानविषयत्वमिति लक्षणे पर्वतो वह्निमान् धूमादित्यत्र वह्न्यभावेऽतिव्याप्तिः पर्वतो बह्निमान् बह्निव्याप्यधूमवांश्चेत्यनुमिति प्रतिबन्धक "पर्वतो बह्न्यभाववानिति" बाधभ्रमविषयत्वस्य तत्रसत्वादतोयर्थाथपदम्। तथाच पर्वतो बह्न्यभाववानिति ज्ञानस्य यथार्थत्वाभावान्न तत्रातिव्याप्तिः। एवमपि ह्रदो वह्निमान् इत्यत्र वह्नयभावेऽतिव्याप्तितादवस्थ्यं ह्रदो वह्निमान् वह्निव्याप्यधमूवांश्चेति अनुमितिप्रतिबन्धक "ह्रदो वह्नयभाववानि" ति यथार्थज्ञानविषयत्वस्य तत्र सत्वात्। यद्रूवावच्छिन्नविषयत्वं प्रकृतानुमितित्व—व्यापकप्रतिबध्यता निरुपित प्रतिबन्धकतावच्छेदकं तद्रूपवत्वमिति विवक्षणे व्यर्थमेव यथार्थपदमित्याशयेन यथार्थपदाऽघटितद्वितीयलक्षणमाचरितं मूलकारैः।

केचित्तु यथा दोषज्ञानं प्रतिबन्धकं तथा ज्ञायमानदोषाणामपि प्रतिबन्धकत्वम्। प्रतिबध्यप्रतिबन्धकभावश्च तत्पुरुषीयतद्वत्ता बुद्धिं प्रति तत्पुरुषीयतद—भाववत्तानिश्चयविशिष्टस्य प्रतिबन्धकत्वम्। वैशिष्ट्यनियामकसम्बन्धश्च स्वीयनिरुप्यनिरुपकभावापन्नः विषयतारुपः। प्रतिबध्यतावच्छेदकसम्बन्धश्च तादात्म्यम्।

एवञ्च प्रथमलक्षणमपि ज्ञायमानदोषप्रतिबन्धकता मताभिप्रायेण दुष्टस्यैवलक्षणं न तु दोषस्य। तत्रानुमितिप्रतिबन्धकस्य यथार्थज्ञानमिति षष्ठीतत्पुरूषः। षष्ठ्यर्थः प्रकारकत्वम्। तथाचानुमितिप्रतिबन्धकप्रकारकयथार्थज्ञानविशेष्यत्वं लक्षणार्थः।

प्रकारता च स्वज्ञानविषयप्रकृतहेतुवाच्छदेकवत्वसम्बन्धेन ग्राह्या। एवञ्च यथार्थपदानुपादाने तादृशसम्बन्धेन दोषप्रकारकभ्रममादाय प्रकृतहेतुभिन्ने "रासभादौ" दुष्टत्वव्यवहारापत्तिवारणाय यथार्थपदोपादानम्। ज्ञायमानदोषाणां प्रतिबन्धकतामते अपि ज्ञानीय''निरुप्यनिरुपकभावापन्न'' विषयतावत्त्वेन स्वीयतादृशविषयतासम्बन्धेन ज्ञानविशिष्टत्वेन वा दोषाणां प्रतिबन्धकतया एकदेशेऽतिव्याप्तिवारणाय यद्रूपावच्छिन्न विषयतासामान्यमनुमितिप्रतिबन्धकतावच्छेदकं तद्रूपविशिष्टप्रकारकप्रमाविशेष्यत्वं लक्षणार्थः बोध्यः।

प्रतिबन्धकतावच्छेदकमित्यत्राऽच्छेदकत्वं स्वरूपसम्बन्धविशेषः। नत्वनतिरिक्तवृत्तित्वरूपम्, न अतो द्वितीयलक्षणाऽभेदः, न वा सामान्यपदवैयर्थ्यम्। दोषाश्चव्यभिचारविरोधसत्प्रतिपक्षऽसिद्धिबाध भेदेन पञ्चविधाः। व्यभिचारत्वञ्च साधारणत्व–असाधारणत्वानुपसंहारित्वान्यतमत्वम्। साध्यसन्देहजनक–कोटिद्वयोपस्थापकतावच्छेदकप्रकारताश्रयत्वमिति। व्यभिचारस्त्रिविधः साधारणत्वासाधारणत्वाऽनुपसंहारित्वभेदात्। तत्र साधारणत्वं साध्याभाववद्वृत्तिहेतुः। तन्निश्चयः 'साध्याभाववद्वृत्तिर्हेतुरित्याकारकः'' साध्याभाववदवृत्तित्व रूपव्याप्ति–ज्ञानविरोधी। यथा धूमवान् वह्नेरित्यत्र धूमाभाववद्वृत्तिवह्निरितिनिश्चयो धूमाभाववद्वृत्तिर्वह्निनरिति व्याप्तिज्ञानविरोधी। तथा च वह्नित्वावच्छिन्न विशेष्यतानिरूपित स्वरूपसम्बन्धावच्छिन्न धूमाभाववद्वृत्तित्त्वावच्छिन्न प्रकारता शालि बुद्धिं प्रति वह्नित्वावच्छिन्न विशेष्यता निरूपित स्वरूपसम्बन्धावच्छिन्न धूमाभाववद्वृत्तित्ववच्छिन्न प्रकारताशालि निश्चयः प्रतिबन्धकः।

एवं साध्यतावच्छेदके हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वमपिसाधारण्यं ज्ञेयम्। तथा च धूमत्वं वह्निमन्निष्ठाभावप्रतियोगितावच्छेदकमिति सिद्धान्तव्याप्तिषटक व्यापकता बुद्धौ विरोधीति। तथाच प्रकृतसाध्ये साध्यतावच्छेदक प्रकारक–ग्रहत्वाऽव्यापिका कृतहेतौ प्रकृतहेतुवाच्छेदकप्रकारकग्रहत्वाऽव्यापिका "निरूप्यनिरूपकभावापन्न" अन्वयव्याप्तिविषयताशालिग्रहत्वव्यापिकाय या प्रतिबध्यता तन्निरूपितप्रतिबन्धकताऽनतिरिक्तवृत्ति विषयतानिरूपकतावच्छेदक

धर्मवत्वं तल्लक्षणम्। एवं ह्रदे वह्निना धूमासाधने वह्निःदुष्ट इत्यत्र प्रतिबन्धकयथार्थज्ञानविषयो दुष्धात्वर्थः। आश्रयत्वं प्रत्ययार्थः। साधनपदार्थोऽनुमितिः। साधनपदार्थानुमितौ ह्रदपक्षकत्वस्य वह्निहेतुकत्वस्य धूमविधेयकत्वस्य चान्वयः। अनुमितेश्च दुष् धात्वर्थघटक प्रतिबन्धकतायामन्वयः। तथाच ह्रदपक्षकधूमसाध्यक–वह्निहेतुकानुमितिप्रतिबन्धकप्रकारकप्रमाविशेष्यताश्रयाभिन्नो वह्निः इति। विषयवत्ता प्रतिबन्धकनिष्ठ प्रकारता च स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्व सम्बन्धेन।

असाधारण्यञ्च साध्यव्यापकीभूताभावप्रतियोगिहेतुः। एवं यथा ह्रदो वह्निमान् जलादित्यत्र वह्निव्यापकीभूताभावप्रतियोगिजलमसाधारण्यम्। यथा शब्दः अनित्यः शब्दत्वादित्यत्र अनित्यत्वव्यापकीभूताभावप्रतियोगिशब्दत्वमसाधारण्यम्, असाधारण्यनिश्चयचानुमितौ विरोधिप्रतिबन्धकता च निश्चयविशिष्ट निश्चयत्वेन। तथाच शब्दत्वान् शब्दः इति निश्चयविशिष्ट–अनित्यव्यापकीभूताभावप्रतियोगि–शब्दत्वमिति निश्चयो विरोधी। दोषता च अनित्यत्वव्यापकीभूताभावप्रतियोगि शब्दत्वस्यैव।

अनुपसंहारित्वञ्च अत्यन्ताभावाप्रतियोगिसाध्यकत्वम्, वा अन्वय–व्यतिरेकिदृष्टान्तरहितत्वम्। यथा सर्वं अभिधेयं प्रमेयत्वात् इत्यत्र अत्यन्ताभावस्य प्रतियोगी घटादिः अप्रतियोगी अभिधेयत्वादिः। तथाच साध्यमत्यन्ताभावाप्रतियोगीति निश्चयो व्यतिरेकव्याप्तिज्ञाने प्रतिबन्धकः।

विरोधश्च हेतौ साध्याऽसामानाधिकरण्यम्। यथा अयं अश्वः गोत्वादित्यादौ अश्वत्वाऽसामानाधिकरण्यं गोत्वम्। अयं हेतुः साध्यसामानाधिकरण्याभाववान् इति निश्चयो ''व्याप्तिघटक साध्यसामानाधिकरण्यज्ञाने विरोधी।

सत्प्रतिपक्षश्च साध्याभावव्याप्यहेतुमत्पक्षरूपः। प्रकृतपक्षता वच्छेदकावच्छिन्न विशेष्यता निरुपित प्रकृतसाध्यतावच्छेदकावच्छिन्न–प्रकारता शाल्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदिका सती विशिष्टपक्षविशिष्टिसाध्यग्रहत्वव्यापकप्रतिबध्यतानिरूपित प्रतिबन्धकतानवच्छेदक निरुक्तपक्षसाध्यवैशिष्ट्यग्रहप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नाऽनुमिति–

निष्ठजन्यतानिरूपित जनकतावच्छेदिका यद्रूपावच्छिन्न विषयिता तद्रूपवत्वम् इति। यथा ह्रदो वह्निमान् धूमात् ह्रदत्वत्, ह्रदो वह्नयभाववान् जलात् मीनवत्। अत्र वह्नि व्याप्य धूमवत् ह्रदः रूपः। एवं वह्न्यभावव्याप्य जलवान् ह्रदरूपश्च सत्प्रतिपक्षः। तन्निश्चयः "विरोधिपरामर्श रूपः" प्रकृतसाध्यानुमितिविरोधी।

स च सत्प्रतिपक्षः द्विविधः। साध्याभावाभाववद्वृत्तिमत् पक्षरूपः, प्रतिहेतु व्यापकसाध्याभावसमानाधिकरण प्रतिहेतुमत् पक्षरूपश्च। प्रथमनिश्चयप्रतिबन्धकता ज्ञानवैशिष्ट्यानवच्छिन्ना। द्वितीयनिश्चयप्रतिबन्धकताज्ञानवैशिष्ट्यावच्छिन्नेति।

## आश्रयासिद्ध्याद्यन्यतमत्वमसिद्धेः सामान्यलक्षणम्।

आश्रयासिद्धिस्तु पक्षे पक्षतावच्छेदकाभावः यथा अतेजस्वी पवतो वह्निमान् धूमादित्यत्र अतेजस्वीत्वाभाववत् पर्वतरूपाऽऽश्रयासिद्धिः तन्निश्चयः अतेजस्वीत्वाभाववत् पर्वत इत्याकारकः "अतेजस्वी पर्वत इति पक्षज्ञाने विरोधी।

तथाच पक्षघटिततया अनुमितौ परामर्शे च प्रतिबन्धकः। न केवलं पक्षे पक्षतावच्छेदकाभावः आश्रयासिद्धिः, किन्तु पक्षे पक्षतावच्छेदकाभावव्याप्यः, पक्षे पक्षतावच्छेदकवदन्योन्याभावः, पक्षतावच्छेदके पक्षतावच्छेकतावच्छेदकाभावः, पक्षतावच्छेदके पक्षतावच्छेदकतावच्छेदकाभावव्याप्यः, पक्षतावच्छेदके पक्षतावच्छेदकतावच्छेदकवदन्योन्याभावः, पक्षतावच्छेदके तादृशान्योन्याभावव्याप्यः। पक्षतावच्छेदकाभाववान् पक्षः, पक्षतावच्छेदकतावच्छेदकाभाववत् पक्षतावच्छेदकम्, पक्षतावच्छेदकतावच्छेदकाभावव्याप्यवत्पक्षतावच्छेदकम्। पक्षता-वच्छेदकतावच्छेदकवदन्योन्याभावव्याप्यवत् पक्षतावच्छेदकमित्यादिरपि आश्रयासिद्धिः। समानप्रकारकज्ञानस्य प्रतिबन्धकत्ववादिनां नव्यानां मते तु पक्षतावच्छेदकाभाववान् पक्षः, तद्व्याप्यवान् पक्षः, पक्षता-वच्छेदकवदन्योन्याभाववान्पक्षः, तद्व्याप्यवान्पक्षरित्यादिः आश्रयासिद्धिः, न तु पक्षे पक्षतावच्छेदकाभावः तद्व्याप्यादिरपि तद्ज्ञानस्यानुमितितत्कारणपरामर्शाऽ-प्रतिबन्धकतया तत्र हेत्वाभासत्वस्यैवाभावात्। अनुगताऽश्रयासिद्धिलक्षणस्य

तत्राऽसत्वाच्च। अतः आश्रयासिद्धेरनुगतलक्षणन्तु ''यद्रूपावच्छिन्नविषयत्वं पक्षतावच्छेदकप्रकारकपक्षविशेष्यक ग्रहप्रतिबन्धकतावच्छेदकं तद्रूपवत्वम् आश्रयासिद्धिरूपदोषत्वम्।

पक्षे हेत्वभावः, हेत्वभाववत् पक्षो वा स्वरूपासिद्धिः। ह्रदो वह्निमान् धूमादित्यत्र धूमाभाववद्ह्रदः स्वरुपासिद्धिः। तन्निश्चयश्च परामर्श विरोधी। भागासिद्धिस्तु एतस्या एव भेदः। सा च पक्षतावच्छेदक सामानाधिकरण्येन हेतोरभावः। यथा उद्भूतरूपादिचतुष्टयं गुणः रूपत्वादित्यत्र रूपत्वहेतोः पक्षैकदेशावृत्तित्वेन तस्य भागे स्वरूपासिद्धत्वम्। स्वरुपासिद्धिस्तु पक्षतावच्छेदकावच्छेदेन हेतोरभावः।

यद्रूपावच्छिन्नविषयित्वं प्रकृतपक्षे पक्षतावच्छेदकवैशिष्टया–वगाहिग्रहत्वाऽव्यापकप्रकृतहेतौ प्रकृतहेतुतावच्छेदकप्रकारकग्रहत्वाऽव्यापक–प्रकृतपक्षतावच्छेदकावच्छिन्न विशेष्यता निरुपित प्रकृत हेतुतावच्छेदकावचिछन्नप्रकारताशालिग्रहत्वव्यापकप्रतिबध्यता निरुपित प्रतिबन्धकतावच्छेदकं तद्रूपवत्वं स्वरुपासिद्धिलक्षणम्। तेन हेतुतावच्छेदकावच्छिन्न हेत्वभाववत् पक्षः, तादृशसाधनाभावव्याप्तववत् पक्षः, हेतुतावच्छेदकावच्छिन्नहेतुवदन्योन्याभाववान् पक्षः, हेतुतावच्छेदकावच्छिन्न साधनवदन्योन्यभाव व्याप्यवान् पक्षः, पक्षे तादृशसाधनाभावरित्यादिः स्वरुपासिद्धेरष्टविधत्वेऽपि न कापि अनुपपत्तिः। ''नव्यमते तु हेतुतावच्छेदकावच्छिन्न हेत्वभाववत्पक्षः'' इत्यादिरूपा चतुर्विधैव स्वरुपासिद्धिः।

व्याप्यत्वासिद्धिस्तु तदुभयभिन्नाऽसिद्धिः। सा च त्रिविधा साध्याऽऽप्रसिद्धः साधनाऽप्रसिद्धिः व्याप्तिविरहरुपा । तत्र साध्याऽप्रसिद्धिः साध्ये साध्यतावच्छेदकाभावः। तथा पर्वतः काञ्चनमयवह्निमान् धूमादित्यत्र काञ्चनमयत्वाभाववान् वह्निरितिनिश्चयस्य काञ्चनमयवह्निरिति साध्यज्ञाने विरोधितया साध्यघटितत्वेनानुमितौ व्याप्तिज्ञाने परामर्शे च विरोधित्वम्। लक्षणन्तु यद्रूपावच्छिन्नविषयित्वं साध्यविशेष्यकसाध्यतावच्छेदकप्रकारकग्रहत्व–व्यापकप्रतिबध्यतानिरुपित प्रतिबन्धकतावच्छेदकं तद्रूपवत्त्वम्। तथा

साध्यतावच्छेदकाभाववत् साध्यम्, साध्यतावच्छेदकाभाव-व्याप्यवत् साध्यम्। साध्यतावच्छेदकवदन्योन्याभाववत्साध्यम्, साध्यतावच्छेदकवदन्योन्याभावव्याप्यवत्साध्यम्, साध्यतावच्छेकतावच्छेदकाभाववत्साध्यतावच्छेदकम्, साध्यतावच्छेदकतावच्छेकाभावव्याप्यतासाध्यतावच्छेदकम्, साध्यतावच्छेदकवदन्योन्याभाववत् साध्यतावच्छेदकम् तादृशान्योन्याभावव्याप्यवत् साध्यतावच्छेदकमिति।

भिन्नप्रकारज्ञानस्यापि प्रतिबन्धकत्वमते साध्ये साध्यतावच्छेकाभावः, साध्ये साध्यतावच्छेदकाभावव्याप्यः, साध्ये साध्यतावच्छेदकवदन्योन्याभावः, साध्ये साध्यतावच्छेदकवदन्योन्याभावव्याप्यः, साध्येतादृशाभावव्याप्यः साध्यतावच्छेदके साध्यतावच्छेकतावच्छेदकवदन्योन्याभावः, साध्यतावच्छेदके तादृशान्योन्याभावव्याप्यः इत्यादिज्ञेयम्।

साधनाप्रसिद्धिस्तु हेतौ हेतुतावच्छेदकाभावः। पर्वतो वह्निमान् काञ्चनमयधूमात् इत्यत्र काञ्चनमयत्वाभाववत् धूमः इति साधनाप्रसिद्धिस्तु काञ्चनमयधूम इति हेतु ज्ञाने विरोधितया हेतुघटितत्वेन व्याप्तिज्ञाने परामर्शे च विरोधी। लक्षणन्तु यद्रूपावच्छिन्नविषयित्वं प्रकृतहेतुतावच्छेदकप्रकारक हेतु विशेष्यक ग्रहप्रतिबन्धकतावच्छेदकं तद्रूपवत्वम्। तच्च रूपं साधनतावच्छेदकाभाववत् साधनत्वादिकम्।

व्याप्तिविरहरुपा च साध्याऽप्रसिद्धिः साधानाप्रसिद्धि स्वरुपाऽसिद्धि-आश्रयाऽसिद्धिभिन्नाऽसिद्धिः। यथा साध्याऽव्यभिचरित सम्बन्धित्वरुपाऽन्वय-व्याप्त्यभाववत् साधनम्, तादृश व्याप्त्यभावव्याप्यवत् साधनम्, तादृशव्याप्तिमदन्योन्याभावव्याप्यवत् साधनम्, तादृशव्याप्तिमत्साधनाभाववत् पक्षः, तादृशव्याप्तिमत् साधनाभावव्याप्यवत् पक्षः, साध्याऽव्यभिचरित सम्बन्धित्वरुपाऽन्वयव्याप्तिमत् साध्यवदन्योन्याभाववत् पक्षः। साध्याभावव्यापकीभूताभावप्रतियोगित्वरुपव्यतिरेकव्याप्तिमत् साधनाभाववत् पक्षादिः, साध्याभाववदवृत्तिसाधनाभाववत् पक्षादिः। भिन्नप्रकारकज्ञानस्य प्रतिबन्धकत्वे साधने

तादृशान्वयव्याप्त्यभावादिरपि।

व्याप्यत्वस्याऽसिद्धिर्यस्मादिति व्युत्पत्त्या व्याप्यत्वासिद्धिपदमुपाधिपरम्, उपाधेश्च व्यभिचारोत्थापकतया दूषकत्वम्।

बाधस्तु पक्षेसाध्याभाव:, साध्याभाववत् पक्षो वा। यथा ह्रदो वह्निमानित्यत्र वह्न्यभाववान्, ह्रदे वह्न्यभाव: वा बाध:। ह्रदो वह्न्यभाववान् ह्रदे वह्न्यभाव इति निश्चायो वा। ह्रदो वह्निमाननित्यनुमितौ विरोधी।

असंकीर्णबाधोदाहरणं तु उत्पत्तिकालावच्छिन्नोघट: गन्धवान् पृथिवीत्वात् इत्यत्र मूलावच्छिन्नो वृक्ष: कपि संयोगीत्यत्र च क्रमेण गन्धाभाववदुत्पत्ति–कालावच्छिन्नघटरूप:, कपी संयोगाभाववान् मूलावच्छिन्नवृक्षरुपश्च बाधो बोध्य:। अत्र सामानाधिकरण्येन अनुमितिं प्रति अवच्छेदकावच्छेदेन बाधनिश्चय: प्रतिबन्धक:। अवच्छेदावच्छेदनाऽनुमितौ तु अवच्छेदकावच्छेदेन सामानाधिकरण्येन च बाधनिश्चय: प्रतिबन्धक:। लक्षणन्तु यद्रूपावच्छिन्न विषयित्वं विरोध्यनुमिति– जनकतावच्छेदकत्वे संति प्रकृतपक्षविशेष्यक पक्षतावच्छेदक प्रकारक ग्रहत्वाऽव्यापिका प्रकृतसाध्यविशेष्यक साध्यतावच्छेदकप्रकारकग्रहत्वाऽव्यापिका प्रकृतपक्षतावच्छेदकावच्छिन्न विशेष्यतानिरुपित प्रकृतसाध्यतावच्छेदक सम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्न प्रकारताशालिग्रहत्वव्यापिका या प्रतिवध्यता तन्निरूपित प्रतिबन्धकतावच्छेदकंसद्रूपवत्वम्। तेन साध्याभाववत् पक्ष साध्यवदन्यपक्ष: पक्षावृत्तिसाध्य–साध्यावन्निष्ठपक्षाऽन्यत्व साध्यनिष्ठपक्षनिष्ठाभावप्रतियोगित्वादे: बाधत्वेऽपि न काप्यनुपपत्ति:।

बाधितानुमानं दशविधम्, धर्मिग्राहकमानबाधितम् द्वयम्, साध्यप्रतियोगिग्राहकमानबाधितम् त्रयम्, साध्यग्राहकमानंजातीयमानबाधितमेकम्, हेतु ग्राहकमानजातीयबाधितमेकम्, हेतुग्राहकमानबाधितम्।

यथा घटो विभु: सत्वात् इत्यनुमानं धर्मिणो "घटस्य" ग्राहकमानेन प्रत्यक्षेण बाधितम्। एवं परमाणव: सावयवा: मूर्तत्वादित्यनुमानं धर्मीपक्ष: "परमाणु"

स्तद्ग्राहकमानेनऽनुमाने बाधितम्। एवं मेरुः पाषाणमयः पर्वतत्वादित्यमनुमानम् सुवर्णमयत्वबोधकमागमेन बाधितम्।

साध्यप्रतियोगिग्राहकमानबाधितम् यथा वह्निरनुष्णः कृतकत्वादित्यनुमानं साध्यीभूताऽनुष्णत्वप्रतियोगिग्राहकप्रत्यक्षेण बाधितम्। शब्दोऽश्रावणः गुणत्वादित्यनुमानं साध्य प्रतियोगिग्राहकानुमानेन, गवयत्वं गवयपदाऽप्रवृत्तिनिमित्तं जातित्वादित्यत्र साध्यप्रतियोगिग्राहकोपमानेन बाधितम्। साध्यग्राहकमानजातीयमानबाधितम्।

यथा– नरशिरः कपालं शुचि प्राण्यङ्गत्वात् शंखवदित्यनुमानम् दृष्टान्ते शंखे शुचितारुपसाध्यग्राहकं यद्वाक्यमागमत्वरूपेण तत्सजातीयेन'' मलमूत्रपुरीषास्थिनिर्गतं ह्यशुचिस्मृतम्। नारं स्पृष्ट्वा तु सस्नेहं सचैलो जलमाविशेद् इत्यागमेन। हेतुग्राहकमानबाधितं यथा–जलाऽनिलौ उष्णौ पृथिवीसमवेत स्पर्शविरुद्धस्पर्शवत्वा– दित्यनुमानं हेतु ग्राहकप्रत्यक्षेणबाधितम्। मनो विभु ज्ञानसमवायाधारत्वादित्यनुमानं मनसिज्ञानसमवायिसंयोगाधारत्वरूप ग्राहकानुमानेन, राजसूयं ब्राह्मण कर्त्तव्यं स्वर्गसाधनत्वादित्यनुमानं राजसूयस्य क्षत्रिय कर्त्तव्यताबोधकहेतुग्राहकानुमानेन बाधितम्।



# प्रमाणार्थः

मानाधीनामेयसिद्धिः समस्तानां प्रमेयतत्वानां निश्चयप्रमाणेनैव जायते। प्रमाणज्ञानमन्तरा प्रमेयतत्वज्ञानासम्भवात्। तच्च प्रमाणतत्त्वविवेचनावसरे सम्पद्यमाने प्रथमं वैशेषिकदर्शने प्रमाणसामान्यस्य लक्षणमुपलभ्यते। यद्यपि सांख्यसूत्रेष्वपि प्रमाणसामान्यलक्षण्स्य स्पष्टमुल्लेखः वर्तते तथापि कणादसूत्राणां सांख्यसूत्रादतिप्राचीनतया प्रथमं भारतीयदर्शनशास्त्रे वैशेषिकदर्शन एव प्रमाणसामान्यविवेचनं स्वीकार्यम्। प्रशस्तपादभाष्ये बुद्धेः विद्याविद्याभेदेन द्वैविध्यमुपलभ्यते। तत्र आद्या प्रत्यक्षलैंगिकस्मृत्यार्षज्ञानभेदात् चतुर्विधा। द्वितीयापि संशयविपर्ययानध्यवसायस्वप्नलक्षणाभेदेन चतुर्विधा। वैशेषिकदर्शने दुष्टज्ञानभिन्नज्ञानं विद्यापदवाच्यमेवमिन्द्रियसंस्कारोभयदोषजन्या अविद्या। इत्थं विद्याविद्ययोः स्वरुपं प्रदर्शितम्। तत्र विद्या पदं प्रमापरमेव प्रतिभाति, अविद्यापदञ्च भ्रमात्मकं ज्ञानं। प्रमात्मकज्ञानजनकस्यैव ज्ञानस्य प्रमाणता, तादृशप्रमात्वावच्छिन्न कार्यता निरूपित कारणतावत्त्वं प्रमाणत्वं ज्ञातं भवति। प्रमीयते अनेन इति करणल्युटा प्रमाणशब्देन प्रमाकरणत्वरुप एव अर्थः समाख्यावलेनापि लभ्यते। एष प्रमाणशब्दः नैयायिकभाट्टैरपि प्रमासाधनपरत्वेनैव व्याख्यातः। प्राभाकरास्तु नहिकेवलं प्रमासाधनपरमेव प्रमाणमपितु प्रमापरमपि। यथा नैयायिकैः प्रत्यक्षशब्दः प्रत्यक्षप्रमायां प्रत्यक्षप्रमाणे च प्रयुज्यते। तथैव प्राभाकरैः प्रमाणशब्दः करणव्युत्पत्त्या प्रमाकरणत्वार्थकः भावप्रत्ययेन च प्रमात्वार्थकः अभ्युपेयते। अत एव गौतमेन प्रथमं प्रमाणतत्त्वमेवविवेचितम्। तथाच वात्स्यानभाष्यकारः 'प्रमाणतः अर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत् प्रमाणं इत्युक्तवान् प्रमाणस्यैव पदार्थप्रमितिकारणतया प्रथमं प्रत्यक्षादिप्रमाणेन घटपटादिपदार्थावबोधे ततः हानोपादानरुपायाः प्रवृत्तेः साफल्यमनुभूयते। तच्च प्रमाणं प्रमीयते अनेनेति करणव्युत्पत्त्या प्रमाकरणार्थकम्। तथाच प्रमाणेनैव पदार्थानां प्रमात्मकं ज्ञानं भवतीति सूत्रकाराणामाशयः। प्रमाणस्यानेकविधानि लक्षणानि विहितानि सन्ति। वात्स्यायनमते उपलब्धिसाधनं प्रमाणमुपलब्धिश्च प्रमात्मकज्ञानं, वार्तिकारोऽपि उपलब्धिसाधनत्वं प्रमाणत्वमित्येवमेव लंक्षितवान्। वाचस्पतिमिश्रास्तु स्मृतिभिन्नामर्थाव्याभिचारिणीं

प्रमां निरूप्य तत्साधनं प्रमाणमित्युक्तवान्। भासर्वज्ञः समीचीनानुभवस्य साधनं प्रमाणमित्येवं प्रमाणलक्षणं निरुपयति। जयन्तभट्टैः स्ववकीयन्यायमंजर्यभिधाने संशयविपर्ययविरहितार्थबोधसंधायिकी सामग्री प्रमाणमिति प्रमाणलक्षणं प्रत्यपादयत्। उदयनाचार्यः अविपरीतोपलब्धिप्रमामभिलक्ष्यतद्घटकं प्रमाणलक्षणं प्रतिपादितवान्। चिन्तामणिकारास्तु "यत्र यदस्ति तत्र तस्यानुभवः प्रमा" आलोकारमते इत्यस्यार्थः यत्र धर्मिणि येन सम्बन्धेन योधर्मोऽस्ति तत्र धर्मिणि तद्धर्मप्रतियोगिक–तत्सम्बन्धावगाह्यनुभवः प्रमा। मथुरानाथतर्कवागीशमते यत्र यदस्तीत्यत्र अस्तित्वं सम्बन्धित्वमात्रं न त्वाधेयत्वं तथाच यत् यत् सम्बन्धीति। तत्रेत्यत्र निरुपितत्वं सप्तम्यर्थ अस्यान्वयः तस्येति षष्ठयर्थविषयतायां, तथाच तत्सम्बन्धि–निरूपिततन्निष्ठविषयताप्रतियोग्यनुभत्वं तत्र तत्प्रमात्वम्।

न च तद्विशेष्यकज्ञानस्यापि तत्प्रमात्वापत्तिः इतिवाच्यम्। तत्प्रकारकज्ञान एव तत्प्रमाव्यवहारादित्यस्वरसात् चिन्तामणिकारेणोक्तम् "तद्वति तत्प्रकारकानुभवो वा" प्रमा। तद्वतीत्यत्र विशेष्यिता सम्बन्धेनावच्छिन्नत्वमेव सप्तम्यर्थः, अन्वयश्चास्य तत्प्रकारकत्वे। तथाच विशेष्यितासम्बन्धेन तद्वच्छिन्ना या तत्प्रकारिता तच्छाल्यनुभवत्वं तत्प्रमात्वम। प्रकारताभेदेने विषयताभेदाभावे रजत एवेदं रजतं रङ्गञ्चेति भ्रमांशप्रमाया असंग्रहश्चेत्यस्वरसात् गंगेशोपाध्यायः लक्षणान्तरमाह "यद्वा यत्प्रकारिका या विषयता तत्प्रकारक समानाधिकरणविषयताकः, स्वप्रकारसमानाधिकरणविषयतको वानुभवः प्रमा"। एकधर्मावच्छिन्न तत्तदभावोभयवन्निष्ठविशेष्यताकं द्रव्यं रजतमित्यादि ज्ञानं न लक्ष्यमितिमते लक्षणान्तरमाह चिन्तामणिकारः। "यद्वा विशेष्यनिष्ठात्यन्ता–भावाप्रतियोगिप्रकारकविषयताप्रतियोगी" विशेष्यनिष्ठेत्यस्यार्थः स्वाश्रयनिष्ठा; एवं विषयता, प्रतियोगिता च स्वरूपतो व्यक्तिद्वयावृत्त्यधिकरणत्वावच्छिन्नत्वेन स्वनिरूपकसम्बन्धावच्छिन्नत्वेन च विशेषणीया, तेन वैशिष्ट्यव्यासज्यवृत्ति–धर्मावच्छिन्नाभावं व्यधिकरणसम्बन्धावच्छिन्नाभावञ्चादाय नाप्रसिद्धिः। तत्र विषयतादिसम्बन्धेन भगवज्ज्ञानादिविशेष्यकप्रमायामव्याप्तिः तत्र तादृशप्रतियोगिनोऽप्रसिद्धेः अतः लक्षणान्तरम् "विशेष्यनिष्ठात्यन्ता–

भावप्रतियोगिप्रकारानवच्छिन्नविषयत्वप्रतियोगी वा, विषयतासमानाधिकरणात्यन्ताभावप्रतियोगिप्रकारकविषयत्वा प्रतियोगिवा, विषयतासमानाधिकरणात्यन्ताभावप्रतियोगिप्रकारानवच्छिन्नविषयताप्रतियोगी वानुभवः प्रमा इत्येवं प्रमालक्षणं निरूप्य तत्करणं प्रमाणमित्येवं रीत्या प्रमाणस्याष्टविधानि लक्षणानि विहितानि।

भाट्टास्तु करणदोषबाधकज्ञानरहितागृहीतज्ञानसाधनं प्रमाणमिति प्रमाणलक्षणं प्रतिपादयन्ति। अध्यवरमीमांसाकुतूहलवृत्तिकारेण अनधिगतार्थगन्तृत्वं प्रमाणत्वमित्येवं प्रमाणलक्षणं निरूपितम्। मानमेयोदयकाराः नारायणाः नैयायिकाभिमतप्रमाकरणत्वं लक्षणमभ्युपेत्य अज्ञाततत्त्वार्थज्ञानमेव प्रमा इत्येवं प्रमालक्षणं प्रतिपाद्यतत्करणे इन्द्रियसन्निकर्षादीनां प्रमाकरणत्वं सूपपन्नं भवति। एवंचाज्ञातयथावस्थितवस्तुविषयकं ज्ञानं प्रमा अनधिगतावाधितार्थविषयकज्ञानजनकंच प्रमाणमित्येवं प्रमातत्करणयोः लक्षणं निष्पद्यते।

प्राभाकरास्तु अनुभूतिरेव प्रमाणम्। अनुभूतिश्च स्वरुपपरिछित्यात्मिका पूर्वानुभूतसंस्कारमात्रजन्यस्मृत्यात्मकज्ञानजन्या, तथाच संस्कारातिरिक्तकारणजन्यत्वविशिष्टसंस्काराजन्यत्वविशिष्ज्ञानकरणत्वं प्रमाणसामान्यलक्षणं निष्पन्नं भवति। एतन्मते याथार्थ्यस्य प्रामाण्यनिमित्तत्वानभ्युपगमेन स्मृतेः यथार्थत्वेऽपि न प्रामाण्यापत्तिः। याथार्थ्यस्य समस्तज्ञानसाधारणतया तस्य कथमपि प्रामाण्यपदप्रवृत्तित्वासम्भवात्।

यद्यपि नैयायिकाः यथा प्रमाकरणं प्रमाणमित्यभ्युपगच्छन्ति तथैव भाट्टाअपि प्रमाकरणस्यैव प्रमाणत्वं प्रतिपादयन्ति। एवंच प्रमाणलक्षणविषये नास्ति कश्चन भेदः। परन्तु प्रमालक्षणविषये अस्तिभेदः न्यायनये तद्वन्निष्ठ–विशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानं प्रमा। भट्टमते चाज्ञाततत्त्वार्थज्ञानमेव प्रमा इत्येवं प्रमालक्षणे भेदः। अन्यथाख्यातिमनभ्युपगच्छन्तः प्राभाकराः सर्वस्याप्यनुभवस्य प्रामाण्यमभ्युपगच्छन्ति। अतः तेषां मते अनुभूतित्वमेव प्रमात्वं तादृशानुभूतिकरणत्वमेव प्रमाणत्वमनया रीत्या विवेचने कृते भाट्टप्राभाकरन्यायमते प्रमाकरणत्वमेव प्रमाणत्वमिति लभ्यते। एतेषुलक्षणत्रयेषु

नैयायिकाभिमतलक्षणस्यैव श्रेष्ठयम्। भाट्ट प्राभाकराभिमतलक्षणयोः निरस्तत्वात्।

तच्च प्रमाणं प्रत्यक्षानुमानोपमानशब्दभेदेन चातुर्विध्यं भजते। सूत्रकृता महर्षिणा गौतमेन स्वकण्ठेनैवोद्धतम्। "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि"

साक्षात्करोमि, अनुमिनोमि, उपमिनोमि शाब्दयामि इत्याकारकस्य अनुव्यवसायस्यान्यथानुपपत्त्या प्रमाणस्य चातुर्विध्यंस्वीकारः। यद्यप्येतदतिरिक्तान्यप्यर्थापत्यनुपलब्धिसंभवैतिह्यनामकानि प्रमाणान्तराणि तन्त्रान्तरे प्रतिपादितानि सन्ति। परन्तु तेषां क्लृप्तप्रत्यक्षानुमानशब्देष्वेवान्तर्भावसम्भवात्, न तेषां क्लृप्तप्रमाणातिरिक्तत्वेन स्वीकारोचितः। क्लृप्तेषु प्रत्यक्षादिप्रमाणचतुष्टयेष्वेवतदान्तर्भावात्।

वैशेषिकास्तु प्रत्यक्षानुमाने द्वे एव प्रमाणे न तु शब्दोपमानयोः प्रमाणान्तरत्वम्। तथाहि दण्डेन गामानयेत्यादि पदानि तात्पर्यविषयस्मारित–पदार्थसंसर्गप्रमापूर्वकाकांक्षयोग्यताशक्तिमत्पदकदम्बकत्व हेतुना पदाथसंसर्ग–प्रमापूर्वकत्वरुपसाध्यार्थयसिद्धत्वेन न तदर्थ शब्दस्यप्रमाणस्यन्तरत्वकल्पना, एवं गवयपदं गवयत्वप्रवृत्तिनिमित्तकम्। असद्वृत्यन्तरे वृद्धैः तत्र प्रयोज्यमानत्वादसति वृत्यन्तरे यत्र वृद्धैः यत्यत् प्रयुज्यते तत्र तत्तत्प्रवृत्तिनिमित्तकम् यथा गोपदं गोत्वप्रवृत्तिनिमित्तकमित्येवंरीत्या अनुमानेनैवगवयत्वप्रवृत्तिनिमित्तकत्वस्य गवयपदे सिद्धतया न तदर्थमुपमानस्य प्रमाणन्तरत्वम्कल्पनीयम्। इत्येवंरीत्या वैशेषिकाः शब्दोपमानयोरनुमानगतार्थत्वं स्वीकुर्वन्ति, परन्तु तन्मतं युक्तिसंगतं न हि प्रतिभाति। यत्तोहि अनुमितिस्तावत् व्यौप्तिज्ञानमन्तरा न जायते। परन्तु उपमितिः शाब्दबोधश्च सादृश्यज्ञाने पदज्ञाने च जाते व्याप्तिाज्ञानमन्तरैवोपमितिशाब्दबोधयोः जायमानंतया नानुमानेऽन्तर्भावः कर्त्तुं शक्यते।

अत्रेदं विचिन्त्यते अनुमितिस्थले सर्वत्रव्याप्तिज्ञानंपरामर्शश्चापेक्ष्येते। शाब्दबोधस्थले च व्याप्तिज्ञानादिकं बिनैव योग्यताकांक्षाज्ञानादिघटितसामग्रया शाब्दबोधोदयेन तद्बोधस्य कथमप्यनुमितिस्वरुपताप्रतिपादयितुमशक्यैव। यद्यपि शब्दस्य प्रमाणन्तरत्वस्वीकारे विभिन्नविषयकप्रत्यक्षंप्रति शाब्दसामग्रया–

अनुमितिसामग्रयाश्च प्रतिबन्धकताद्वयकल्पने महद्गौरवम् आपद्येत्। शब्दस्यानुमानान्तर्गतत्वाभ्युपगमे एकविधमेवप्रतिबन्धकत्वम्कल्पनीयम् भवतीति लाघवमित्येवं लाघवानुरोधेन सर्वत्रैव शाब्दबोधस्थले व्याप्तिज्ञानादि- कल्पनस्यैवौचित्यम्। तंथापि पर्वतो वह्निमानित्याकारकसाध्यवत्ता- निश्चयासत्त्वेऽपिसिषाधयिषासत्त्वे अनुमितिः जायते तद्विरहदशायां च न भवत्यनुमितिः। शाब्दबोधस्तु तादृशनिश्चयदशायां सिषाधयिषाविरहेऽपि जायते। एतद्वैलक्षण्यसम्पादनाय शब्दस्य प्रमाणन्तरत्वं स्वीकार्यमेव। किञ्च शाब्दबोधानन्तरं जायमाने अहममुमर्थं ऋणोमि शाब्दयामीत्यादि अनुव्यवसाये यानुमित्यादिविलक्षणा शाब्दबोधत्मिका प्रमा भासते। तस्याः अपलापः वैशेषिकैरपि नहि कर्त्तुं शक्यते। एवंच तादृशानुभवबलात् शाब्दबोधरुपायाः अतिरिक्तायाः प्रमायाः सिद्धौ सत्यां तत्करणत्वेन शब्दस्यापि प्रमाणान्तरमवश्यमंगीकार्यमेवं रीत्या न्यायनये चत्वारि एव प्रमाणानि सन्ति।

भाट्टास्तु प्रत्यक्षानुमानोपमानशब्दार्थापत्यनुपलब्धिभेदेन षड्विधानि प्रमाणान्यभ्युपगच्छन्ति। तेषामयमाशयः। नैयायिकाभिमतचतुर्विधप्रमातः विलक्षणप्रमाद्वयस्योपलम्भात् तादृशप्रमितिद्वयकरणत्वेनार्थपत्तिअनुपलब्धिनामकं नैयायिकाभिमतचतुर्विधप्रमाणातिरिक्तं प्रमाणद्वयमवश्यमेवाभ्युपेयम्। इयंचार्थापत्तिः प्रमितस्यार्थस्यार्थान्तरमन्तरेणानुपपत्तीति तदुपपत्यर्थस्य कल्पनम्। यथा जीवतश्चैत्रस्य गृहासत्त्वं बहिसत्त्वकल्पनमन्तरानुपपन्नमिति जीवतश्चैत्रस्य बहिर्भावकल्पनमर्थापत्तिः। सेयमर्थापत्तिः प्रमाणचतुष्टयातिरिक्तादृष्टार्थापत्तिश्रुतार्था- पत्तिभेदेने द्विविधा।

दृष्टार्थापत्तिः अत्र दृष्टशब्देनोपलब्धमात्रं प्रतीयते, अथापि दृष्टाद्भिन्नत्वेन श्रुतपदस्य गृह्यमाणतया श्रुतातिरिक्तप्रमाणपंचकजन्यप्रमापरत्वेन गोबलीवर्दन्यायेन दृष्टशब्दः प्रतीयते अनयारीत्या प्रमाणपंचकपूर्विका– दृष्टार्थापत्तिः पंचविधा।

(१) प्रत्यक्षपूर्विका – प्रत्यक्षेण दाहस्यवह्नौ उपलब्धे तत्र दाहशक्तिकल्पना।

(२) अनुमानपूर्विका – देशान्तरप्राप्त्यात्मकेन हेतुना आदित्यस्य गतिमत्व–

मनुमायतदवश्यं भावेन तत्र गमनशक्तिकल्पना।

(३) शब्दपूर्विका— यथा पीनोदेवदत्तः दिवा न भुङ्क्ते इति श्रुते सति रात्रिभोजित्वकल्पना।

(४) उपमानपूर्विका— गवयदर्शनेन तत्सदृशो गौः इत्युपमानप्रमाणेन गवि गवयसादृश्यं ज्ञातवतः पुरुषस्योपमानज्ञानविषयिणी ग्राह्यशक्तिर्विद्यते इति कल्पना।

(५) अनुपलब्धिपूर्विका— जीवतो देवदत्तस्य गृहासत्वदर्शनेन बहिर्भावस्यादृष्टस्य कल्पनात्।

श्रुतार्थापत्ति— अपरिपूर्णस्य वाक्यस्यान्वयसंपादनाय यत्र शब्दान्तरस्याध्याहारः क्रियते सा श्रुतार्थापत्तिः यथा द्वारं द्वारमित्यत्र वाक्ये अन्वयसिद्ध्यर्थ—मर्थान्तरेणावरणादिना शब्दगम्येनावश्यं भवितव्यमिति सामान्यं प्रमाणम्, तदर्थस्य श्रुतशब्दाभ्यामज्ञानात् बाधे सत्यश्रुतशब्दगम्यतया कश्चनावरणाद्यात्मकः अर्थः कल्पनीयः। शब्दादेवार्थस्य प्रतीतेः लाघवेनावरणार्थः शब्दः कल्पप्यते, इयमेव शब्दकल्पना श्रुतार्थापत्ति पदवाच्या।

दृष्टार्थापत्तौ चार्थः कल्प्यते इत्येवमेतयोर्भेदः एवं रीत्या मीमांसाकाः अर्थापत्तेः प्रमाणान्तरत्वमभ्युपगच्छन्ति परन्तु तार्किकाः तस्याः, प्रमाणान्तरत्वं नाभ्युपगच्छन्ति। उपपादककल्पनायाः व्याप्तिज्ञानमन्तराऽसम्भवात्। तथाहि जीवंचैत्रः गृहेनास्ति इत्यनुपपद्यमानं बहिर्भावेऽसति तमापादयति इत्येवमुदाहरन्ति। तत्रायं विचारः प्रसरति जीवतः गृहाभावस्य किं वानुपपन्नमव्याप्यस्याव्यापकस्य नास्ति सहभावः इति का हानिः? अथ कथं बहिःसत्त्वस्योपापादकं भवितुमर्हति। यदिच चैत्रनिष्ठः गृहाभावः बहिः सत्त्वेन सहावश्यं भवति। स स्वभावसिद्ध इत्युच्यते चेत् तदा यत्र यत्र जीवित्विशिष्टगृहासत्त्वं तत्र तत्र बहिः सत्त्वंमित्येवमुच्येत् तदा वाक्यमिदमन्वयव्याप्तितुल्यमेवातो नेदं प्रमाणमनुमानातिरिक्तमिति।

यदिच व्याप्तिपक्षधर्मतायाः विद्यमानत्वेऽपि अनुपपद्यमानेन गृहासत्त्वेन

बहि:सत्त्वस्यकल्पनमर्थापत्तिअतिरिक्तं प्रमाणमित्युच्यते तदा बहिमन्तरा अनुपपद्यमान: धूम: बन्हिं कल्पयति, इत्यमुमानप्रमाणस्यैवोच्छेदशपद्येदत: अर्थापत्ते: नानुमानातिरिक्त प्रमाणत्वम्।

भाट्टास्तु अनुपलब्धेरपि प्रमाणान्तरत्वमम्युपगच्छन्ति। सा चोपलब्ध्यभाव: स चाभाव प्रत्यक्षानुमानोपमानशब्दार्थापत्तिपंचकप्रवृत्तिप्रतियोगिक: यत्र प्रवृत्तियोग्यानां प्रत्यक्षादिप्रंचकप्रमाणानां प्रवृत्ति, सा योग्यानुपलब्धि:।

न च प्रमाणाभावस्य प्रमाणलक्षणत्वं कथं सम्भवतीति वाच्यम्, प्रमाणाभावलक्षणघटकप्रमाणशब्दस्य सत्पदार्थोपलम्भकप्रत्यक्षादि–प्रमाणपंचकाभिप्रायकत्वात् तदभाव: अभावाख्यानुपलब्धिप्रमाणस्य लक्षणमिति न किंचिद्नुपपन्नम्। स चोपलब्धेरभाव: प्रमाणभाव–स्मरणभावभेदेन द्विविध:। प्रत्यक्षप्रमाणभावरुपोलब्धेरभावात् घटपटाद्यभावज्ञानं जायते, योग्यानुमानाभावरुपानलब्धे: चेष्टालिंगकानुमानस्य रुपदर्शनबोध्यकस्यानुदय: दिवारुपदर्शनाभावमुल्लूकस्य बोधयति स्मरणाभावरुप: अनुपलम्भ:। यथा अत्र मैत्र: प्रातर्नासीदिति सायं काले ज्ञानम्। प्रात: कालविशिष्टस्य मैत्रस्य सायंकाले दर्शनयोग्तायारभावात्। सति स्मरणयोग्यत्वे स्मरणाभाव एव तदा, प्रात: कालविशिष्टमैत्राभावं गमयति।

भाट्टास्तावदनुपलब्धे: महताऽऽग्रहेणप्रमाणान्तरत्वमभ्युपगच्छन्ति, तेषामयमाशय:। अभावख्य: कश्चन पदार्थ: अवश्यमभ्युपेय: तत्प्रत्यक्षं चानुपलब्धिमन्तरा प्रत्यक्षादिप्रमाणो सम्भवति। अत: अनुपलब्धिनामकप्रमाणान्तरमभ्युपेयम्।

प्राभाकरास्तु अभावस्यातिरिक्तपदार्थत्वमेव नाभ्युपगच्छन्ति। अत: तन्मते तत्प्रत्यक्षनियामकस्य कश्चनातिरिक्तप्रमाणस्य स्वीकारो नावश्यक एव।

नैयायिकास्तावदभावस्य यद्यप्यतिरिक्तपदार्थत्वं स्वीकुर्वन्ति। तथापि तद्ग्रहणार्थं प्रत्यक्षाद्यतिरिक्तत्वेनानुपलब्धे: प्रमाणन्तरत्वं नाभ्युपगच्छन्ति।

तेषामयमाशयः। प्रत्यक्षादिभिः गृह्यमाणतया अभावाख्यप्रमेयं स्वविषयकबोधायनप्रमाणान्तरमपेक्षते ताथाहि इह भूतले घटो नास्तीत्येकमेव ज्ञानमिहकुण्डे वदरमिति ज्ञानवत् तत्र भूप्रदेशस्य चाक्षुषं ज्ञानमभावस्य चानुपलब्धिप्रमाणेन ज्ञानं भवति, इत्येवं प्रतिपादयितुं न शक्यते। अव्यवधानेनैव भूप्रदेशवत् घटनास्तितताया अपि बिना विच्छेदमनुभूयमानत्वात् अतः तत्र चाक्षुषमेव ज्ञानं जायते इति।

न च समबद्धस्यैव चक्षुषाग्रहणमितिनियम एव इति वाच्यम्, भावपदार्थेषु खल्वेषनियमः यः सम्बद्धः तस्यैव चक्षुषा ग्रहणं न त्वसम्बद्धस्य, अभावस्त्वसम्बद्धोऽपि चक्षुषा गृह्यत एव। न च असम्बद्धस्यापि चक्षुषा ग्राह्यत्वे देशान्तरस्थाभावस्यापि चक्षुषा ग्राह्यत्वे देशान्तरस्थाभावस्यापि चक्षुषाग्रहणं प्रसज्येत् इति वाच्यम्, आश्रयग्रहण—सापेक्षा ह्यभावस्य प्रतीतिः भवति स चाश्रयः सन्निहित एवं प्रत्यक्षयोग्यो भवति। अतः देशान्तरस्थाभावानां न प्रत्यक्षापत्तिः, अथवा इन्द्रियसंयुक्तविशेषताख्यसन्निकर्षेणअनुपलब्धेः प्रमाणान्तरत्वमभ्युपेयम्।

एवं पौराणिकास्तावत् सम्भवाख्यप्रमाणान्तरमप्युभ्युपगच्छन्ति, तेषामयमाशयः, शतं सहस्त्रे सम्भवतीति सम्मवाख्याप्रमाणति सहस्त्रेण शतज्ञानं भवति सम्भवोऽपि न प्रमाणान्तरं तस्यानुमानगतार्थत्वात् यथेदं शतसंख्यावत् सहस्त्रसंख्यावत्त्वात्। शतसंख्याव्याप्यविंशति संख्यायुक्तफलसमूहवदिति रीत्या।

सम्भवः नानुमानाद्भिद्यते एवमिहवटेयक्षः प्रतिवशत्यित्याधा—कारकमैतिह्यप्रमाणमपिशब्दप्रमाणान्तर्गतमेव। इत्थं नैयायिकाः प्रत्यक्षानुमानोपमान—शब्दभेदेन प्रमाणस्य चातुर्विध्यमेवाभ्युपगच्छन्त्येतेषां चतुर्णा प्रमाणानामावश्यकत्वात्, एतदतिरिक्तानां प्रमाणनामेष्वेव प्रमाणेष्वन्तर्भावा इति प्रतिपादयन्ति।

तत्र प्रमाणशब्दः प्रमापरत्वे प्रमाकरणत्वे चोपलभ्यते। यथा अनधिगतार्थगन्तृ प्रमाणमिति प्रमालक्षणे प्रमाणशब्दः प्रमापरतया प्रदर्शितः। अथ च प्रत्यक्षानुमानोपमानशब्दाः प्रमाणनीति न्यायसूत्रे प्रमाणपदं प्रमाकरणत्वेन प्रदर्शितम्। अत्रेदंविचिन्तनीयम् यत् प्रमाणशब्दस्य विभिन्नेष्वर्थेषु प्रयोगः नाधारहीनः किन्तु

व्युत्पत्तिवैचित्र्यादेव तत्र प्रमार्थकप्रमाणशब्दे प्रमीयते इति प्रमाणमिति व्युत्पत्त्या प्रपूर्वमाधातोः ल्युटप्रत्ययान्निष्पन्नमतः प्रमार्थकः भावप्रत्ययस्य प्रकृत्यर्थातिरिक्तार्थबोधकत्वात्, प्रमाकरणरुपे अर्थे प्रयुक्ते प्रमाणशब्दे व्युत्पत्तिस्तावत् प्रमीयते अनेनेति व्युत्पत्त्या प्रपूर्वकमाधातोः करणार्थकल्युटप्रत्ययः तेनैव प्रमाशब्दः निष्पद्यते। अतः ईदृशव्युत्पत्तिसिद्धप्रमाणशब्दः प्रमाकरणार्थक एवं प्रत्यक्षशब्दस्यापि क्वचित् इन्द्रियजन्यप्रमायां तत्प्रमाकरणे तद्विषयीभूतपदार्थेषु च प्रयोगः व्युत्पत्तिवैचित्र्यादेव भवति। यथा प्रति विषयं प्रतिगतमक्षमिन्द्रियं यस्मै प्रयोजनाय तत्प्रत्यक्षमिति व्युत्पत्तया प्रत्यक्षशब्दः इन्द्रियजन्यप्रमामिकज्ञानस्य बोधकः।

प्रतिगतंविषयं प्रतिगतमर्थात् विषयसन्निकृष्टमक्षं प्रत्यक्षमिति व्युत्पत्त्या प्रत्यक्षपदं प्रत्यक्षप्रमाकरणबोधकं, यतोहि विषयसन्निकृष्टस्येन्द्रियस्यैव प्रत्यक्षप्रमाणत्वाभ्युपगमात्।

प्रति यं विषयं प्रतिगतमक्षं प्रत्यक्षमिति व्युत्पत्त्या च प्रत्यक्षपदं प्रत्यक्षप्रमाविषयपरमिन्द्रिय– सन्निकृष्टस्यैवार्थस्यैव विषयत्वात्।

इत्थं विभिन्नव्युत्पत्ति वैचित्र्यात् प्रत्यक्षशब्दस्य प्रत्यक्षप्रमा प्रत्यक्षप्रमाकरण प्रत्यक्षप्रमाविषयपरत्वार्थतया भिन्नभिन्नार्थेषु प्रयोगः न भ्रमास्पदः। तत्रेन्द्रियस्यार्थेन सह सन्निकर्षाद् यज्ज्ञानमुत्पद्यते तत् प्रत्यक्षम्। यथा सूत्रकारः इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारिव्यवसायात्मकं प्रत्यक्षम्'' यत्रात्ममनः संयोगः मन इन्द्रियसंयोगादिरुपायां ज्ञानसामान्यसामग्रयां सत्यां यत् प्रत्यक्षज्ञानासाधारणंकारणीभूतासामग्री इन्द्रियार्थसन्निकर्षरुपतया जन्यं ज्ञानं प्रत्यक्षम्। अत्र चक्षुः सन्निकृष्टेषु मरुमरीच्यादिषु जायमानस्योदकमिति भ्रमात्मकज्ञानस्य प्रत्यक्षत्वापत्तिवारणाय अव्यभिचारीति अतस्मिन् तदिति ज्ञानं व्यभिचारि। तस्मिन् तदिति ज्ञानमव्यभिचारि एतन्मते प्रमात्वाप्रमात्वभेदेनानुभवस्य द्वैविध्याभ्युपगमात् प्रत्यक्षज्ञानस्य यथार्थानुभवत्वाद्व्यभिचारिणा तेन भाव्यमिन्द्रियार्थसन्निकर्षजन्ययोः सुखदुःखयोः अव्यप्तिपरिहाराय ज्ञानपदम्, शाब्देऽतिव्याप्तिवारणाय अव्यपदेश्यमिति। तत्रेन्द्रियजन्यं ज्ञानं प्रत्यक्षमिति विश्वनाथः यद्यपि मनोरुपेन्द्रियजन्यं

सर्वमेव ज्ञानं तथापि इन्द्रियत्वेन रूपेणेन्द्रियाणां यस्मिन् ज्ञाने करणत्वं तत्प्रत्यक्षमिति। अत्रेन्द्रियत्वावच्छिन्नजनकता निरुपित जन्यतावत्त्वम्। प्रत्यक्षम्।

न च ज्ञानकारणमनः संयोगाश्रयत्वघटितस्येन्द्रिस्य घ्राणादिव्यक्तिभेदेन भिन्नतया अननुगतत्वात् कारणत्वावच्छेदकत्वासम्भव इति वाच्यम्। ज्ञानकारणमनः संयोगाश्रयत्वरुपस्येन्द्रिस्य तत्तदिन्द्रियभेदेन भिन्नत्वेऽपि तादृशसंयोगेषु तत्कारणतावच्छेदकतया.........................

व्याप्यजातिविशेषमभ्युपेत्य तादृशजातिविशेषावच्छिन्नावच्छेदकता निरूपित इन्द्रियनिष्ठकारणता निरूपितकार्यतावत्त्वम् प्रत्यक्षलक्षणं निर्वाच्यम्। एववंच जन्यज्ञानसामान्यम् प्रति मनसः मनस्संयोगसम्बन्धेन हेतुत्वेऽपि चक्षुः संयोगादिनिष्ठतादृशवैजात्यपुरस्कारेण मनः संयोगस्य जनरूज्ञानत्वावच्छिन्नकार्यता निरुपितकारणत्वविरहात् नानुमित्यदावुक्तप्रत्यक्षलक्षणस्यातिव्याप्तिः।

बौद्धमते अर्थजन्यज्ञानमेव प्रत्यक्षप्रमाणमत एव प्रत्यक्षस्य भेदयोः निर्विकल्पकसविकल्पकयोर्मध्ये निर्विकल्पकस्यैव प्रत्यक्षप्रमाणत्वं न तु विकल्पकस्य यतोहि निर्विकिल्पकं स्वलक्षणभिन्नैः लक्षणैः शून्यं वस्तुमात्रविषयावगाहितया वस्तुरुपार्थजन्यत्वात्प्रमाणं सविकल्पके तु निर्विकल्पकोपस्थितपदार्थ–नामजात्यादिकल्पनाविशिष्टतया सत्यवस्तुनोऽसत्यपदार्थविशिष्टत्वेन ग्रहणं जायते। अतो तन्न प्रमाणम्। तेषामयमाशयः। यद् वस्तु नाम जात्यादिना व्यवह्रियते, तदनादिकालप्रवृत्तस्वाभाविककार्यकारणप्रवाहघटकतया स्वस्वरुपे सत्यं भवितुमर्हति, परन्तु प्रकाशीभूते वस्तुनि यन्नामजात्यादि–वैशिष्ट्यं गृह्यते तत्मनुष्यस्य कल्पनामात्रमतो न सविकल्पकस्य प्रमाणत्वम्। अत एवोक्तम्–

तत्र प्रत्यक्षकल्पनापोढमभ्रान्तं कल्पनायाः अपोढंअपेतं रहितमर्थात् कल्पनास्वभावरहितम्, यदा चक्षुरादिना घटादेः साक्षात्करो भवति तदा इदं ज्ञानं साक्षात्कारिज्ञानमिति कथ्यते। अत्र ज्ञाने नामजात्यादिकल्पनाभिः सम्बन्धोन भवति। घटभानं तु जायते परन्तु घटत्वविशिष्टो घटः इत्येवं ज्ञानं न जायते। अत एव इदं ज्ञानं निर्विकल्पकं कल्पनापोढमिति कथ्यते एतदनन्तरं विकल्पात्मकः अयं

घटः इत्याकारकं नामजात्यादिकल्पनाविशिष्टं सविकल्पकं ज्ञानमुत्पद्यते तत्तु न प्रमाणम्।

तच्च प्रत्यक्षं सविकल्पकनिर्विकल्पकभेदेन द्वे
अक्षजा प्रतिमिर्द्वेधा सविकल्पाविकल्पिका।
करणं त्रिविधं तस्याः सन्निकर्षस्तुषड्विधः।।
घट तं नीलनीलत्वं शब्दशब्दत्व–जातयः।
अभावसमवायौ च ग्राह्यसम्बन्धषट्कतः।।

तत्र विकल्प्यते विशिष्यते वस्तु येन सविकल्पः विशेषणं तेन सहितं सविकल्पं सविकल्पमेव सविकल्पकम्। अथवा विकल्पयति विशिनष्टि यत् तत्विकल्पकं विशेषणम् तेन सहितं सविकल्पकं सविशेषणमितिव्युत्पत्त्या सविकल्पकशब्दस्य विशिष्टं ज्ञानमित्यर्थो लभ्यते।

यद्यपि व्युत्पत्त्या सविकल्पकशब्देनानुमित्युपमितिशाब्दस्यापि ग्रहणं सम्भवति परन्तु एष शब्दः सविकल्पप्रत्यक्षे योगरुढः केचन नामजात्यादियोजनासिहतं ज्ञानं सविकल्पकमित्यपि प्रतिपादयन्ति। अन्ये तु अभिलाषसंसर्गयोग्यप्रतिभासं सविकल्पमित्यपि सविकल्पकलक्षणं वर्णयन्ति। अयं गौः घटो नीलः चैत्रा गच्छति गौर्नमहिषइत्यादिकम् प्रत्यक्षात्मकं ज्ञानं सविकल्पकम्। इदमेव ज्ञानं समस्तप्रवृत्तीनां व्यवहाराणांच मूलकारणम्। अत एवोक्तं अखिलायाः लोकयात्रायाः मूलं सविकल्पकम्। विकल्पेभ्यो विशेषणीयो निर्मूक्तं निर्विकल्पकम। निर्विकल्पकमेव निर्विकल्पकमित्यनया व्युत्पत्त्या विशेषणरहितस्वरुपमात्रग्राहकं ज्ञानं निर्विकल्पकशब्देनोच्यते, निविकल्पकं ज्ञानं बालमूकादिज्ञानंसदृशं भवति। यतोहि कस्यापि ज्ञानस्यामिलापः शब्दादेव जायते। निर्विकल्पकज्ञानं येन रुपेण वस्तुनं गृह्णाति तेन रुपेण शब्दात् प्रतिपादनं न हि कर्तुं शक्यते। निर्विकल्पकज्ञानस्याविशिष्टवस्तुविषयकत्वात् शब्दाच्च विशिष्टस्यैव वस्तुनः प्रतिपादनं क्रियते। व्यवहारादितः संकेतविशिष्टस्यैव वस्तुनः प्रतीयमानत्वात्। तथाच निर्विकल्पकज्ञानविषयीभूतवस्तुबोधकशब्दाभावात् वाक्यपटुनापि व्यक्तिना

तत्प्रकटनं न संभवत्यत: निर्विकल्पकज्ञानस्य भवति बालमूकादिविज्ञानसदृशत्वम् एवं लौकिकालौकिकभेदेनापि प्रत्यक्षस्य द्वैविध्यं भवति। तत्र लौकिकषड्विध ासन्निकर्षजन्यप्रत्यक्षम्। लौकिकसन्निकर्षश्च संयोग:, संयुक्तसमवाय: सयुक्तसमवेतसमयवाय:, समवाय:, समवेतसमवाय:, विशेषण–विशेष्यभेदेन षड्विध:।

यथा कारिकावल्यां–

विषयेन्द्रियसम्बन्धोव्यापार: सोऽपि षड्विध:।
द्रव्यग्रहस्तु संयोगात्, संयुक्तसमवायत:।।
द्रव्येषुसमवेतानां, यथा तत्समवायत:।
तत्रापि समवेतानां, शब्दस्य समवायत:।।
तद्वृत्तीनां समवेतसमवायेन तु ग्रह:।
प्रत्यक्षं समवायस्य विशेषणतया भवेत्।।
विशेषणतया तद्वदभावानां, गहो भवेत्।
यदि स्यादुपलभ्येतेत्येवं यत्र प्रसज्यते।।
घटादिप्रत्यक्षे इन्द्रियसंयोगो व्यापार:।
घटादिद्रव्यसमवेतगुणादिप्रत्यक्षे इन्द्रियसंयुक्तसमवायो व्यापार:।

न च द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षं प्रति इन्द्रियसंयोगस्य हेतुत्वे त्वक्प्रभासंयोगात् प्रत्यक्षत्वापत्ति: एममन्धकारेऽपि घटचक्षु: संयोगात् स्पार्शनापत्ति: द्रव्येन्द्रियसंयोगस्य तत्रसत्त्वात्, इन्द्रियत्वस्याऽननुगततया तद्घटितसंयोगत्वादेरप्यननुगततया परस्परव्यभिचारात् इति वाच्यम्। विषयता सम्बन्धेन द्रव्यनिष्ठंयत् चक्षुरिन्द्रियजन्यप्रत्यक्षं प्रति चक्षुसंयोग: समवायसम्बेन्धन कारणम्। एवं विषयतासम्बन्धेन योग: समवायसम्बन्धेन कारणम्। एवं विषयतासम्बन्धेन द्रव्यसमवेतगुणादिनिष्ठं यत् चक्षुरिन्द्रियजन्यप्रत्यक्षं तं प्रति चक्षु: संयुक्तसमवाय: स्वरुपसम्बन्धेन कारणम्। विषयता सम्बन्धेन प्रत्यक्षं द्रव्यसमवेतगुणे कारणम्। विषयतासम्बन्धेन प्रत्यक्षं द्रव्यसमवेतगुणे वर्तते, तत्र

चक्षुरसयुक्तघटादिद्रव्यसमवाय: स्वरुपसम्बन्धेन वर्तते। एवं विषयतासम्बन्धेन द्रव्यसमवेतगुणादिसमवेतगुणत्वादिनिष्ठं चक्षुरिन्द्रियजन्यप्रत्यक्षं प्रति चक्षु:संयुक्तसमवेत समवाय: स्वरुपसम्बन्धेनकारणम्। स्पार्शनप्रत्यक्षादावपि विषयता सम्बन्धेन द्रव्यनिष्ठं स्पार्शनंप्रत्यक्षं प्रति त्वक्संयोग: समवायेन कारणम्। विषयता सम्बन्धेन, द्रव्यसमवेतगुणादिनिष्ठस्पार्शनप्रत्यक्षं प्रति त्वक्संयुक्तसमवाय: स्वरुपसम्बन्धेन कारणम्। विषयता सम्बन्धेन द्रव्यसमवेतसममवेतगुणत्वा-दिनिष्ठस्पार्शनप्रत्यक्षं प्रति त्वक्संयुक्तसमवेतसमवाय: स्वरुपसम्बन्धेनैव कारणम्।

पृथिव्या: नीलपरमाणुषु नीलरुपगतं नीलत्वं जाति:, तथा पृथिवीपरमाणुनिष्ठा पृथिवीत्वजाति: चक्षुरिन्द्रियजन्यप्रत्यक्षविषया स्यात्। तत्र नीलत्वे पृथिवीत्वे च स्वाश्रयसमवेतसमवेतत्वसम्बन्धेनोद्भूतरुपस्य महत्परिमाणस्य च सत्त्वात्। तथाच महत्परिमाणं घटे समवायेन वर्तते। तदेव स्वसमवायिसमवेतसमवेतत्वसम्बन्धेन नीलत्वजातौ वर्तते। स्वंमहत्परिमाणं—तत्समवायिकारणं घट:, तत्र संमवेतं नीलरुपं, तत्र समवेता नीलत्वजाति:। तथाच विषयता सम्बन्धेन नीलत्वजातिनिष्ठं चाक्षुषप्रत्यक्षं प्रति स्वाश्रयसमवेतसमवेतत्वसम्बन्धेन उद्भूतरूपं कारणं भवति। इति परमाणुनीलवृत्तिनीलत्वजाते: प्रत्यक्षापत्ति: स्यादित्याशयेन विश्वनाथपंचानन भट्टाचार्येणोक्तम् ''नीले नीलत्वं जातिरेकैव घटनीले परमाणुनीले च वर्तते। तथाच महत्त्वसम्बन्धो घटनीलमादाय वर्तते उद्भूतरुपसम्बन्धस्तूभयमादायैव वर्तते''। उभयमादायेत्यस्यार्थ: घटनीलमादाय परमाणुनीलमादाय च स्वाश्रयसमवेतसमवेतत्वादिसम्बन्धेन नीलत्वे वर्तते। न च परमाणुनीलं नोद्भूतरुपं तर्हि कथं परमाणुनीलमादाय नीलत्वे उद्भूतरुपसम्बन्धो ज्ञेय: इति वाच्यम्। परमाणुनीलमादायेत्यस्य परमाणुनीलघटितपरम्परयात्रसरेणुगतोद्भूतरुपसम्बन्धो बोध्य:। इत्यर्थकत्वात्, परमाणुनीलघटितपरम्परा तु स्वाश्रयसमवायिसमवायि-समवेतसमवेताख्य:, स्वं त्रसरेणुगतमुद्भूतं नीलरूपं, तदाश्रय: त्रसरेणु: तत्समवायि द्वयणुकं, तत्समवायी परमाणु: तत्र समवेतं परमाणुनीलं तत्रसमवेतं नीलत्वम्। न

च त्रसरेणुगतमहत्परिमाणस्यापि स्वाश्रयसमवायिसमवायिसमवेतसमवेतत्वरुपरम्परासम्बन्धेन सत्त्वमनुक्त्वा "उद्भूतरुपसम्बन्धस्तु उभयमादाय वर्तते" इति पृथक् कथनं भट्टाचार्येणयत्कृतम् तदसंगतमिति वाच्यम्। परमाणुपाकवादिनः केचन परमाणौ उद्भूतगन्धमुद्भूतरूपंच स्वीकृर्वन्ति तन्मतमालम्ब्य "उद्भूतरुपसम्बन्धस्तुभयमादाय वर्तते" इत्युक्तम्।

न्व्यास्तु परमाणौ उद्भूतरूपमुद्भूतगन्धंच नांगीकुर्वन्ति अननुभवात्। अतो नव्यमते त्रसरेणुगतमुद्भूतरुपं स्वाश्रयसमवायिसमवायिसमवेतसमवेतत्व–समबन्धेन परमाणुनीलघटितेन नीलत्वेन गृहीत्वोक्तग्रन्थः संगमनीयः। न च एवं पृथिवीपरमाणौ, पृथिवीत्वजातिरेकैव घटेऽपि वर्तते घटगतपृथिव्रीत्वे च घटगतमहत्परिमाणमुद्भूतरूपं च स्वाश्रयसमवेतत्वसम्बन्धेन वर्ततेऽतः पृथिवीपरमाणौ पृथिवीत्वस्य प्रत्यक्षत्वापत्तिः। एवं वायौवर्तमानायाः सत्ताजातेः चाक्षुषप्रत्यक्षत्वापत्तिः इति वाच्यम्। उद्भूतरुपावच्छिन्नं महत्त्वावच्छिन्नं यत् चक्षुः संयुक्तं तत्समवायो द्रव्यसमवेतरूपादिगुणसाक्षात्कारे हेतुः। उद्भूतरूपावच्छिन्नं महत्त्वावच्छिन्नं यत् चक्षुः संयुक्तं तत्समवेत समवायो द्रव्य समवेतसमवेतरूपत्वादि–प्रत्यक्षे हेतुः। उद्भूतरूपमहत्परिमाणघटितचक्षुः सन्निकर्षस्य हेतुत्वे च पृथिवीपरमाणुनीले नीलत्वस्य पृथिवीपरमाणौ पृथिवीत्वस्य न प्रत्यक्षापत्तिः। यत्तोहि परमाणौ यश्चक्षुःसंयोगः स न महत्परिमाणविशिष्टः, परमाणौ महत्परिमाणाभावात्। तथाच महत्परिमाणविशिष्टं यच्चक्षुस्संयुक्तं तत्समवेतसमवायस्य परमाणुनीलगतनीलत्वेऽभावान्न तत्र नीलत्वस्य प्रत्यक्षः। एव महत्परिमाणविशिष्टं यच्चक्षुस्संयुक्तं तत्समवायस्य पृथिवीपरमाणुगतपृथिवीत्वेऽभावान्न तत्र पृथिवीत्वस्य प्रत्यक्षः।

न च अन्धकारे महत्परिमाणविशिष्टोद्भूतरूपविशिष्टचक्षुस्संयुक्तस्य घटस्य प्रत्यक्षं न भवति। अतः उक्तकारणसत्त्वेऽपि प्रत्यक्षाभावात् व्यभिचारः इति वाच्यम्। तत्रालोकसंयोगत्वाच्छिन्नं चक्षुस्संयोगे विशेषणं देयम्। तथाचैकस्थलावच्छेदेन यो महत्त्वविशिष्टोद्भूतरूपविशिष्टाऽऽलोकसंयोग विशिष्ट

चक्षुस्संयोग: स द्रव्य प्रत्यक्षे कारणम्'' इत्येवं कार्यकारणभाव:। एव द्रव्यस्पार्शन प्रत्यक्षे महत्त्वावच्छिन्नोद्भूतस्पर्शावच्छिन्नत्वक्संयोग: कारणम्। द्रव्यसमवेतस्पर्शादिप्रत्यक्षेमहत्त्वावच्छिन्नोद्भूतस्पर्शावच्छिन्नत्वक्संयुक्तसमवेतसमवाय: कारणम् द्रव्यसमवेतसमवेतस्पार्शनप्रत्यक्षे महत्त्वावच्छिन्नोद्भूतस्पर्शा–वच्छिन्नत्वक्संयुक्तसमवेतसमवाय: कारणम्। गन्धप्रत्यक्षे महत्त्वावच्छिन्न–घ्राणसंयुक्तसमवाय: कारणम्। गन्धसमवेतस्य गन्धत्वस्य घ्रणेन्द्रियजन्यप्रत्यक्षे महत्त्वावच्छिन्न घ्राणसंयुक्तसमवेतसमवाय: कारणम्। रसविषयकप्रत्यक्षे महत्त्वावच्छिन्नरसना संयुक्तसमवाय: कारणम्। रससमवेतरसत्वप्रत्यक्षे महत्त्वावच्छिन्न रसनासंयुक्तसमवेत्समवाय: कारणम्। कर्णशष्कुल्यवच्छिन्न: नभ: श्रोत्रमिति श्रोतस्याकाशात्मकत्वात् श्रोतात्मकाकाशसमवेतशब्दस्य प्रत्यक्षे श्रोत्रानुयोगिन: समवाय: कारणम्। शब्द समवेत श्रावणप्रत्यक्षे अर्थात् शब्दसमवेतशब्दत्वादे: प्रत्यक्षे श्रोत्रानुयोगिकसमवेतसमवाय: कारणम्। पूर्वोक्तादिकार्यकारणभावस्थले चाक्षुषादिभेदेने नानाविधम् लौकिसन्निकर्षप्रयोज्यविषयतानिरूपकं प्रत्यक्षं बोध्यम्। एवंमात्मवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षं प्रति मन: संयोग: कारणम्। आत्मसमवेतज्ञानादिप्रत्यक्षं प्रति मन: संयुक्तमवाय: कारणम्। आत्मसमवेत समवेतसुखत्वज्ञानत्वादिप्रत्यक्षं प्रति मन: संयुक्तसमवेतसमवाय: कारणम्। भूतले घटाभावप्रत्यक्षस्थले चक्षुरादीन्द्रियसंयुक्तभूतले विशेषणं घटाभाव: स्वरूपसम्बन्धेन वर्तते। स्वरूपसम्बन्धावच्छिन्नवृत्तिता एव विशेषणता, विषयता इत्युच्यते सा च घटाभावे वर्तते अतोऽभावप्रत्यक्षे इन्द्रियसम्बद्धविशेषणता हेतु:। एवं रूपसमवायवान् घट: इत्यत्र समवायप्रत्यक्षस्थले चक्षु:सम्बद्धघटे विशेषणं समवाय: स्वरूपसम्बन्धेन वर्तते विशेषणता रूपा विषयता समवायनिष्ठा अत: समवायप्रत्यक्षे इन्द्रियसम्बद्ध विशेषणतासन्निकर्ष: कारणम्। विशेषणविशेष्यभावाख्यषष्ठसन्निकर्ष: इन्द्रियसम्बद्ध विशेष्यत्वम्, इन्द्रिय सम्बन्द्धविशेषणत्वभेदेन द्विविध:। भूतलेघटाभाव: इत्यस्यार्थ: भूतलवृतितावान् घटाभाव:। अत्र घटाभावो विशेष्य पदार्थ: भूतलं तु वृत्तितासम्बन्धेन घटाभावे विशेषणंभवति। तत्र घटाभावप्रत्यक्षे चक्षु स्संयुक्तभूतल–

निरूपितविशेष्यताख्य: सन्निकर्षो हेतु:। घटाभाववद्भूतलमिति यदा प्रत्यय: तदा घटाभावो भूतलेविशेषणं भवतीति तत्र चक्षुस्संयुक्तभूतलनिरूपित विशेषणतासन्निकर्षो हेतु:।

एवमलौकिकसन्निकर्ष: त्रिविध:। सामान्यलक्षणज्ञानलक्षणयोगजभेदात्।
अलौकिकस्तु व्यापार: त्रिविध: परिकीर्तित:।
सामान्यलक्षणो ज्ञानलक्षणो योगजस्तथा।।''

सामान्यलक्षणेत्यत्र लक्षणशब्दस्य स्वरूपार्थकत्वे सामान्यस्वरूपाप्रत्यासत्ति: इत्यर्थो लभ्यते, सा च सामान्य स्वरूपा प्रत्यासत्ति: विशेषणतारूपातदर्थश्चेन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतसामान्यम्। सामान्यस्वरूपाप्रत्यासत्ति प्रत्यक्षयो: कार्यकारणभावश्च। तत्प्रकारकतदाश्रयचाक्षुषत्वावच्छिन्नं प्रति चक्षु: सन्निकृष्टधर्मिकचाक्षुष– प्रकारतापन्नधूमत्वं प्रत्यासत्ति:। लक्षणशब्दस्य ज्ञानार्थकत्वे च सामान्यविषयकं ज्ञानं प्रत्यासत्ति: लभ्यते। तादृशज्ञानस्य प्रत्यासत्तित्वाभ्युपगमे तु स्व प्रकारीभूत तत्सामान्याश्रयनिष्ठविषयता सम्बन्धेन तत्प्रकारकतदाश्रय प्रत्यक्षत्वावच्छिन्नं प्रति स्वविषयीभूततत्तत्सामान्याश्रयनिष्ठाविषयतासम्बन्धेन तद्विषयकज्ञानत्वावच्छिन्नं कारणमितिकार्यकारणभाव:। यदि सामान्यलक्षणाया: प्रत्यासत्तित्वं नाभ्युपेयते, तदा पर्वतीयधूमदर्शनानन्तरं पर्वतीयवह्ने:, अनुमितिर्न स्यात्। तत्कारणीभूतपरामर्शस्य धूमनिष्ठपर्वतीयवह्निव्याप्तिज्ञानस्य पूर्वमसत्त्वात् परामर्श एव न सम्भवति। अत: पर्वतीयधूमे पर्वतीयवह्निव्याप्तिभानार्थं सामान्यलक्षणावश्यमभ्युपेया।

तदभ्युपगमे चैकत्र महानसीयधूमे वह्निव्याप्तेरनुभूयमानत्वे धूमत्वरूपसामान्यलक्षणया सकलधूमेषु व्याप्तिग्रहसम्भवात् नानुमितेरनुपपत्ति:। यदा किंचिद्वस्तुज्ञानं भवति तदा तद्वस्तुज्ञानं तेन वस्तुना सहेन्द्रियस्य ज्ञानलक्षणसन्निकर्षो भवति यथा घटे ज्ञाते, ज्ञातघटेन सह मनस: ज्ञानलक्षणसन्निकर्षो जायते ततश्च घटज्ञानविषयकमानसप्रत्यक्षे ज्ञानविशेषणतया घटोभासते। यदि ज्ञानलक्षणयो: सन्निकर्ष: न स्वीक्रियते, तदा घटं जानामीत्याकारक मानसप्रत्यक्षे

ज्ञानविशेषणतया घटस्य भानं न स्यात्, प्रत्यक्षे इन्द्रियसम्बन्द्धवस्तुन एव घटेन सह मनोरूपेन्द्रिस्य लौकिकसन्निकर्षाभावात् ज्ञानलक्षणासन्निकर्ष अवश्यमभ्युपेयम्।

योगजः योगाभ्यासजन्यधर्मविशेषः तेनैव सन्निकर्षेण योगिनां समस्तातीतानागतादिवस्तूनां प्रत्यक्षं जायते। सच युक्तयुंजानभेदेनेद्विविधः। प्रत्यक्षोपजीवकत्वात् प्रत्यक्षनिरूपणानन्तरमनुमानं निरूपितं। अनुमितित्वावच्छिन्नकार्यतानिरूपितकारणत्वमनुमानत्वम्। तच्चानुमानं परामर्शरूपमिति केचित्।

न च यद्यपि प्रत्यक्षोपजीवकत्वं यथानुमाने विद्यते तथैव प्रत्यक्षेऽपि अनुमानोपजीवकत्वमस्त्येव । यतोऽदृष्टस्य कार्यसामान्यं प्रति साधारणकारण–तयाऽनुमानं प्रत्यपि जनकत्वं, तदुत्पत्तिश्चानुमानधीनकृतिसाध्यता ग्रहाधीनप्रवृत्य–धीनयागादिना जायते। अतोऽदृष्टद्वारा अनुमानोपजीवकत्वं प्रत्यक्षे विद्यते। एतद्दशायां प्रत्यक्षोपजीवकत्वादनुमानं निरूपितम्। अनुमानोपजीवकत्वादनुमान निरूपणानन्तरं प्रत्यक्षमेव कुतो न निरूपितमिति चेत् तत्रोच्यते "अनुमानोपजीवकतायाः प्रत्यक्षे विद्यमाना सा अदृष्टद्वारिका न साक्षात्प्रत्यक्षमनुमानोपजीवकम्। सकलमेव चानुमानमदृष्टाद्वारकं साक्षात्प्रत्यक्षोपजीवकमेतद् विशेषमाहत्यैव प्रत्यक्षनिरूपणानन्तरमनुमानं निरूपितम्। तच्चानुमानं नहि परामर्शरूपमपितु व्याप्तिज्ञानरूपमेव

तथाच—

व्यापारस्तु परामर्शः, करणं व्याप्तिधीर्भवेत्।।
अनुमायां, ज्ञायमानं लिङ्गंतु करणं न हि।
अनागतादिलिंगेन न स्यादनुमितिस्तदा।

तच्चानुमानं स्वार्थपरार्थभेदेन द्विविधम्। स्वार्थ स्वस्यानुमितेः हेतुः तथाहि महानसादौधूमाग्नयोर्व्याप्तिं प्रत्यक्षेण ज्ञात्वा पर्वतसमीपंगतः तद्गते च पर्वतोवह्निमान् न वेत्याकारकसंशयं जायते ततः अविच्छिन्नमूलकधूमदर्शनेन पूर्वानुभूतधूमनिष्ठव्याप्तेः स्मरणं ततः वह्निव्याप्यधूमवानयं पर्वतः

इत्याकारकपरामर्शः। तेन पर्वतोद्देश्यकवह्निविधेयकानुमितिः जायते स्वयं धूमाग्निमनुमाय परं बोधयितुं पंचावयववाक्यं प्रयुंक्ते, तत्परार्थानुमानम् यथा पर्वतः वह्निमान् धूमात् यो यो धूमवान् स स वह्निमान् यथा महानसं तथाचायम्। तस्मात्तथेत्यनेन वाक्येन प्रतिज्ञादिमत्प्रतिपादितपक्षसत्त्वादिपंचरूपोपपादितलिंगात् परोऽपि अग्निं प्रतिबध्यते तच्चलिंगमन्वयव्यतिरेकि केवलान्वयिकेवलव्यतिरेकिभेदात त्रिविधम्।

प्रकृतसाध्यनिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्न प्रकारताकपक्षविशेष्यकनिश्चयोत्पन्नप्रकृतसाध्यकविधेयकानुमितित्वघटितधर्मा–वच्छिन्नस्वनिष्ठकार्यतानिरूपितकारणतावच्छेदकीभूतप्रकारितात्वव्यापक प्रकृतसाध्यान्वयव्याप्तित्वावच्छिन्नप्रकारिकाताकानुमितिकरणत्वं केवलान्वय्यनुमानम्। तथाच धूमव्यापकवह्निसमानाधिकरणधूमवान् पर्वत इत्याकारकनिश्चयादेवानुमितिः तादृशानुमितिनिष्ठ कार्यतानिरूपितकारणतावच्छेदकप्रकारितात्वस्य वह्न्यन्वयव्याप्तिप्रकारितायामेव सत्त्वात् तत्र साध्यीभूतवह्न्यन्वय–व्याप्तिप्रकारितात्वस्याक्षततया तादृशव्याप्तिप्रकारितात्वव्यापक–साध्यान्वयव्याप्तिप्रकारितात्वं निर्विवादमितितादृशानुमितिकरणत्वस्य निरूक्तव्याप्तिज्ञाने सत्त्वाल्लक्षणसमन्वयः प्रकृतहेतुतावच्छेदकावच्छिन्न–प्रकारताकनिश्चयोत्तरप्रकृतसाध्यविधेयताकानुमितित्वघटितधर्मावच्छिन्नस्वनिष्ठकार्यता निरूपितकारणतावच्छेदकप्रकारितात्व व्यापकप्रकृतसाध्यव्यतिरेकि–व्याप्तिप्रकारिताकत्वानुमितिकरणत्वम् केवलव्यतिरेकित्वम्। तेन धूमवान् वह्नेनरित्यादौवखण्डधूमाभावव्यापकवह्न्यभावप्रतियोगित्वरूपव्याप्तेरप्रसिद्धया असदनुमानस्य लक्ष्यतामते धूमसाध्यक वह्निहेतुक केवलव्यतिरेकिणि नाव्याप्तिः। तत्र भ्रमात्मक व्यतिरेकव्याप्तिज्ञानीयप्रकारितायाः प्रसिद्धेः।

प्रकृतहेतुतावच्छेदकावच्छिन्नव्यापकप्रकृतसाध्यतावच्छेदका–वच्छिन्नव्यापकप्रकृतसाध्यतावच्छेदकावच्छिन्न– साध्यसमानाधिकरणप्रकृतहेतुमान् पक्षः इत्याकारकान्वय परामर्शजन्यत्वे सति प्रकृतसाध्याभावव्यापका–

भावप्रतियोगितावच्छेदकहेतुतावच्छेदकावच्छिन्नप्रकारकपक्षविशेष्यकनिश्चयात्मकव्यतिरेकपरामर्शजन्या यानुमितिः तत्करणत्वमन्वयव्यतिरेकित्वम्। एतल्लिंगज्ञानमेव लिंगपरामर्शपदवाच्यं भवति। तज्जन्यं ज्ञानमनुमितिः। व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं ज्ञानमनुमितिः। व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं ज्ञानमनुमितिः। व्याप्तिविशिष्टश्चासौ पक्षधर्मता व्याप्तिविशिष्टपक्षधर्मता तस्याः ज्ञानमिति व्युत्पत्त्या व्याप्तिप्रकारकाभिन्नपक्षसम्बन्धविषयकज्ञानजन्यत्वमनुमितेर्लभ्यते। एतल्लक्षणघटकव्याप्तिः अव्यभिचरितत्वपदप्रतिपाद्या भवति। अव्यभिचरितत्वंच व्यभिचाराभावरूपः। तच्च रूपं "साध्याभाववदवृत्तित्वम्" यद्यपि अत्र लक्षणे महानसीयवह्न्यभावाधिकरणपर्वतादिनिरूपतिवृत्तितायाः धूमे विद्यमानतया अव्याप्तिः, तथापि साध्यभावपदेन साध्यतानिरूपितावच्छेदकतात्वाच्छिन्न प्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्ति प्रतियोगिताकाभाावो विवक्षितः। रूपवृत्तित्वंच स्वनिरूपितावच्छेदकतात्वावच्छिन्न प्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, एवंचोक्तस्थले वह्निनिष्ठसाध्यता निरूपितावच्छेदकतात्वावच्छिन्न प्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदके वह्नित्वगतैकत्व महानसीयवह्न्यभावीयप्रतियोगितानिरूपितावच्छेदकतात्वानच्छिन्नमहानसीयत्ववह्नित्वगतवृत्ति अवच्छेदकतायाः अभावेन महानसीयवह्न्यभावीयप्रतियोगितायाः अवर्तमानतया न महानसीय वह्न्यभावमादायाव्याप्तिः सम्भवति।

यदि चायमेक इत्यादिप्रतीतेः समवायेनैवोपपत्तौ एकत्ववह्नित्वादेः पर्याप्त्यभ्युपगमो निष्प्रामाणिक इत्युच्यते तदा साध्यताविशिष्टप्रतियोगिताकाभाव एव साध्याभावपदार्थः। वैशिष्ट्यंच स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वस्ववृत्तित्वोभयसम्बन्धेन, स्वृत्तित्वमपि स्वनिरूपिताकावच्छेदकतावैशिष्ट्यं स्वसामानाधिकरण्यं, स्वावच्छेदकसम्बन्धावच्छिन्नत्वं, स्वानवच्छेदकानवच्छिन्नत्वं, स्ववृत्तित्वमेतद् चतुष्टयसम्बन्धेन। स्ववृत्तित्वंच स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन। अत्र लक्षणे वह्न्यभावाधिकरणधूमावयव निरूपितसमवायसम्बन्धावच्छिन्न वृत्तितायाः धूमे विद्यमानतया वह्निसाध्यकधूमहेतुकस्थले जायमानायाः अव्याप्तेः परिहाराय

साध्याभावाधिकरणनिरूपितवृत्तितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वस्यावश्वयं निवेशनीयतया सत्तावान् जातेरित्यत्रसत्ताभावाधिकरणसामान्यनिरूपितहेतु-वाच्छेदकसम्बन्धावच्छिन्नवृत्तितायाअप्रसिद्धत्वादव्याप्तिः। हेतुतावच्छेदकावच्छिन्न-हेत्वधिकरणतया निरूपित हेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयता प्रतियोगिक-विशेषणताविशेषसम्बन्धेन साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदका-वच्छिन्नप्रतियोगिताक साध्याभावत्वावच्छिन्नप्रतियोगिकताकसाध्याभाववृत्ति-साध्यसामान्यीयप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नाधेययता निरूपित निरवच्छिन्ना-धिकरणताश्रय निरूपितवृत्तित्वाभाव विवक्षणेनोक्ताव्याप्तिवारणसम्भवेऽपि इदं वाच्यं ज्ञेयत्वादित्यत्र केवलान्वयिसाध्यकस्थले वाच्यत्वाभावाधिकरणा-प्रसिद्धयाऽव्याप्तिः दुष्परिहरैव। एवमन्योन्याभावघटितं चाव्यभिचरितत्वं साध यवदन्या- बृत्तिरूपं तदर्थश्च साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध यनिष्ठावच्छेदकता- भिन्नावच्छेदकतानिरूपकसाध्यनिष्ठावच्छेदकतानिरूपक प्रतियोगिताकभेदा- धिकरणनिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्न वृत्तित्वाभावो व्याप्तिः। अत्रापि लक्षणे सत्तावदन्यसामान्यनिरूपित समवायसम्बन्ध ावच्छिन्नवृत्तित्वाप्रसिद्ध्या- वाच्यत्ववदन्याप्रसिद्ध्याचोक्तस्थलद्वयाव्याप्तेः परिहारः कथमपि न कर्तुं शक्यते। अतः व्याप्तिः नाव्यभिचरितत्वपदप्रतिपाद्या। तथाचोक्तं मणिकारैः ''न तावदव्यभिचरितत्वम् केवलान्वयिन्यभावात्''।

व्यधिकरणधर्मावच्छिन्नाभावभ्युपगन्तृ सोन्दणमतानुयायिनः अव्यभिचरितत्वस्य यौगिकार्थकत्वमनभ्युपेत्य तस्य परिभाषिकत्वमभ्युपगच्छन्ति। तन्मते यद्धर्मावच्छिन्नसमानाधिकरणाः साध्यतावच्छेकावच्छिन्नव्यापकतावच्छेदक-प्रतियोगितका यावन्ताऽभावाः स्वविशिष्टयद्धर्मावच्छिन्नहेत्वधिकरणावच्छेदेन प्रतियोगिसमानाधिकरणाः तद्धर्मवत्वं व्याप्तिः।

इदं वाच्यं ज्ञेयत्वादित्यादौ ज्ञेयत्वत्वावच्छिन्न समानाधिकरणस्य वाच्यत्वत्वावच्छिन्नवन्निष्ठाभावीयप्रतियोगितानवच्छेदकप्रतियोगिताकस्य समवायितया वाच्यत्वाभावस्य तादृशाभावविशिष्टहेत्वधिकरणावच्छेदेन

प्रतियोगिसमानाधिकरणतया न केवलान्वयिन्यव्याप्तिः। व्यधिकरणधर्मावच्छिन्नाभावश्च न प्रतियोग्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकाभाववत्त्वम् तथा सति समनीयताभावयोरैक्यमते घटत्वेन पटाभावस्यैव पदत्वेन घटाभावरूपताया घटत्वेन पटाभावस्यप्रतियोगिघटोऽपि तत्र च घटत्वरूपविद्यमानतयाप्रतियोग्यवृत्ति-धर्माप्रसिद्ध्याऽसम्भवापत्तेः। यदि च स्वाश्रयवृत्तिधर्मावच्छिन्नप्रतियोगिताका-भाववत्त्वम् व्यधिकरणधर्मावच्छिन्नाभाववत्त्वम् इत्येवं निवेश्याऽसम्भवपरिह्रियते तदा विशिष्ट सत्तया गुणो नास्तीत्यभावस्य संग्रहो न स्यात्, अत्राह प्रतियोगिता विशिष्ट प्रतियोगिताकाभाव एव व्यधिकरणधर्मावच्छिन्नाभावपदार्थः। प्रतियोगितायां प्रतियोगिता वैशिष्टयं स्वतादात्म्य स्वाश्रयनिष्ठाधिकरणता निरूपकता-विशिष्टान्यावच्छेदकताकत्वोभयसम्बन्धेन अवच्छेदकतायां निरूपकतावैशिष्टयं स्वावच्छेदकसम्बन्धावच्छिन्नत्व; स्वसामानाधिकरण्य स्वानवच्छेदकानवच्छिन्नत्व, स्ववृत्तित्वैतच्चतुष्टयसम्बन्धेन एवंरीत्या व्यधिकरणधर्मावच्छिन्नाभावः परिष्कर्तुं शक्यते। परन्तु व्यधिकरण धर्मावच्छिन्नाभावघटितं व्याप्तिलक्षणं कथं भवितुं नार्हति। प्रतियोग्यवृत्तिधर्मस्य प्रतियोगितावच्छेदकत्वानंगीकारात्। तथाचायमनुमानप्रयोगः। प्रतियोगिता स्वाश्रयवृत्तिधर्मानवच्छिन्नाप्रतियोगितावच्छेदक विशिष्टे वैशिष्टयावगाहिबुद्धित्वावच्छिन्नजनकतानिरूपितजन्यवाच्छेदक प्रकारतावच्छेदकानुयोगितानिरूपितत्वादिति। अनेन प्रतियोगितायां स्वाश्रयवृत्ति धर्मानवच्छिन्नत्वस्यासिद्धौ तादृशधर्मावच्छिन्नप्रतियोगिताकधर्मावच्छिन्ना-भावस्याभावात् तादृशाभावघटितं लक्षणं न साधु। उक्तेषुव्याप्तिलक्षणेषुपूर्वोक्तदोषाणां विद्यमानतया निर्दुष्टं व्याप्तिलक्षणमाहुः चिन्तामणिकाराः।

'प्रतियोग्यसमानाधिकरणयत्समानाधिकरणात्यन्ताभावीयप्रतियोगिता-वच्छेदकावच्छिन्नं यन्न भवति तेन समं तस्य सामानाधिकरण्यम्'' व्याप्तिः इति। प्रतियोगिसमानाधिकरणहेतुसमानाधिकरणात्यन्ताभावीय प्रतियोगिता-वच्छेदकावच्छिन्नभिन्नसाध्यसामानाधिकरण्यमिति। तथाच ज्ञेयत्वसमानाधिकरणा-त्यन्ताभावीयप्रतियोगितावच्छेदकावच्छिंन्नभिन्नं यत्वाच्यत्वम् तद् सामानाधिकरण्यस्य ज्ञेयत्वहेतौ सत्त्वात् भवति लक्षणसमन्वयः। नानाव्यक्तिसाध्यके

वह्निमान् धूमादित्यादौ धूमाधिकरणपर्वतादिवृत्ति तत्तद्व्यक्त्यभावीयप्रतियोगिता–वच्छेदकावच्छिन्नभिन्नत्वस्य वह्नौ विद्यमानतया अव्याप्तिपरिहारायान–वच्छेदकत्वानुसरणं, कपिसंयोगी एतद्वृक्षत्वादित्यत्राव्याप्यवृत्तिसाध्यकसद्धेतौ हेत्वधिकरणे एतद्वृक्षे कपिसंयोगाभावस्य विद्यमानतयाऽव्याप्तिपरिहारायाभावे प्रतियोगिवैयधिकरण्यविशेषणमयमात्मा ज्ञानादित्यत्र प्रतियोगिव्यधिकरणात्मत्वा–भावमादायाव्याप्तिनिरासाय हेतुसामानाधिकरण्यमभावविशेषणमेवं विशिष्टसत्तावान् जातेरित्यादावतिव्याप्ति निरासाय प्रतियोग्यसामानाधिकरण्यस्य प्रतियोता–वच्छेदकावच्छिन्नासामानाधिकरण्यमर्थो विधेयम्। तच्च व्याप्यवृत्तिसाध्यकस्थले सर्वथैव नोपादेयम्। अव्याप्यवृत्तिसाध्यकस्थले च क्वचिदेयं क्वचिद् न देयम्। येन सम्बन्धेन येन रूपेण यद्व्याप्यवृत्तिः तेनरूपेण तेन सम्बन्धेन तत्साध्यतायां नोपादेयम्। यथा संयोगी द्रव्यत्वादित्यत्रैव संयोगत्वेन संयोगस्याव्याप्यवृत्तित्वेऽपि समवेतत्वेन रूपेण व्याप्यवृत्तितया समवेतत्वेन तत्साध्यतायां नोपादेयमेवं समवायसम्बन्धेन द्रव्यत्वसत्त्वादेः व्याप्यवृत्तित्वेऽपि कालिकसम्बन्धेनाऽव्याप्यवृत्तितया तेन सम्बन्धेन साध्यतायां तदुपादेयमेव।

प्रतियोगिवैयधिकरण्यघटितलक्षणंच यादृशप्रतियोगितावच्छेदकान–वच्छिन्नहेत्वधिकरणं तादृशंप्रतियोगितानवच्छदेकं यत् साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यमत्रेदं विचिन्तनीयम्। यतः कालो घटवान् महाकालत्वादित्यत्र महाकालत्वसमानाधिकरणानां सर्वेषामेवाभावानां प्रतियोगिसमानाधिकरणत्वात् प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्याऽव्याप्तिः। अत्र गगनादेः यदि केनापि सम्बन्धेनवृत्तित्वं न भवति इत्यभ्युपेयते, तदा साध्यतावच्छेदकसम्बन्धसामान्ये यादृशप्रतियोगितावच्छेदकावच्छिन्न प्रतियोगिकत्व हेत्वधिकरणीभूतयद्किंचिदनुव्यक्त्यनुयोगिकत्वोभयाभावः तादृशप्रतियोगितान–वच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः। स्वरूपसम्बन्धेन गगनादेः वृत्तिमत्वे तु प्रतियोग्यनधिकरणहेत्वधिकरण वृत्यभावीयप्रतियोगिता सामान्ये यत्सम्बन्धावच्छिन्नत्व यद्धर्मावच्छिन्नत्वोभयाभावः

तेन सम्बन्धेनतद्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्ति इति निर्दुष्टं व्याप्तिलक्षणम्।

दीधितिकारास्तु केवलान्वयिनो लक्ष्यत्वं नाभ्युपगच्छन्ति। अतस्तन्मते साध्याभाववद्वृत्तित्वम्। व्याप्तिरिति व्याप्तिलक्षणं समीचीनमेवेदृशव्याप्तिविशिष्टव्याप्तिपक्षधर्मतावत्त्वम् सद्धेतुत्वं तदभाववत्त्वंचदुष्टत्वं सद्धेतोरेव भ्रमात्मकव्याप्तिलक्षणलक्ष्यत्वम्।



# हेत्वाभासानां न्यूनाधिकसंख्यानिरूपणम्

हेत्वाभासप्रकारभेदे आचार्याणां परस्परं मतभेदः। तत्र वैशेषिकसम्प्रदायप्रसिद्धमतेऽनुमानस्य लिंग नहि पंचरूपोपपन्नं, किन्तु पक्षसत्वसपक्षसत्वविपक्षासत्वरूपत्रिलक्षणमेव। उक्तधर्मत्रयाणां मध्ये यस्यकस्यैकधर्मस्य धर्मद्वयस्य वाऽभावे हेत्वाभासो भवति। तथाच सूत्रम् च

"अप्रसिद्धोऽनपदेशोऽसन् असन्दिग्धश्चाऽनपदेश" इति सूत्रानुसारेणासिद्धविरुद्धव्यभिचारभेदात् हेत्वाभासः त्रिविधः। अत एवोक्तं "विपरीतमतो यत् स्यात् एकेन द्वितयेन वा विरूद्धासिद्धसन्दिग्धमलिङ्गंकाश्यपोऽब्रवीत् इति।

वैशेषिकसूत्रस्यभाष्यकारेण प्रशस्तपादाचार्येण प्रंशस्तपादभाष्ये निगदितं यत् "एतेनासिद्धविरूद्धसन्दिग्धानध्यवसितवचनानामनपदेशत्वमुक्तं भवति"। वैशैषिकसूत्रस्यटीकाकारेणः श्रीबल्लभाचार्येण स्वकीये "न्यायलीलावती" इत्याख्ये ग्रन्थे हेंत्वाभासानां चातुर्विध्यं प्रतिपादितम्।" तदाभासास्तु चत्वारः। असिद्धविरूद्धसव्यभिचारानध्यवसिताः" उक्तकथनात् वैशेषिकसूत्रकारस्यासिद्ध– विरूद्धसव्यभिचारातिरिक्तः अनध्यवसितोऽपि हेत्वाभासःइष्ट इति प्रतिभष्ति उदयनाचार्यस्य वैशेषिकग्रन्थे (किरणावल्यां) असिद्धविरूद्धसव्यभिचारातिरिक्तः सत्प्रतिपक्षबाधितोऽपि हेत्वाभासाः एवं पञ्चप्रकारः हेत्वाभासानामिति। एतेनप्रतियोगिनिरूपणालिंगप्रतिपत्तिः शिष्याणां सुकरो भवति। यथा– लिङ्गाभासव्यावृत्तं लिङ्गमितिव्यतिरेकिणापिलक्षणं दर्शितं भवति। अत उक्तलक्षणालिङ्गात् कालात्ययापदिष्टप्रकरणसमरहितादेकेन लिङ्गलक्षणेन द्वाभ्यां लिङ्गलक्षणाभ्यां वा शब्दात् त्रितयेन च तद् विपरीतं रहितं तदलिङ्गसामान्यतो लिङ्गाभासं कश्यपात्मजकणादोऽब्रवीत्। का पुनस्तस्य विशेषसंज्ञा? अताह विरूद्धासिद्धमिति....................................... चकारादनपदेशस्य च पुनरावर्तनादन्योऽपि कालात्ययापदिष्टप्रकरणसमरूपो हेत्वाभासोऽस्तीति सूचितम"

उक्तकथनद्वारा प्रतिभाति यत् पंच एव हेत्वाभासा इति। वस्तुत: वैशेषिकसूत्रकारातिरिक्तवैशेषिकानुयायिन: केचनचत्वार: हेत्वाभासा: केचन पंच हेत्वाभासा: स्वीकुर्वन्ति।

प्राचीनन्यायनव्यन्यायमतेसमतुल्यतैव अर्थादुभयविधमते पंचैव हेत्वाभासा:। यथा चिन्तामणिकारा:— "ते च सव्यभिचारविरूद्धसत्प्रतिपक्षासिद्ध—बाधिता: पंच''।

न्यायमंजर्या ''सव्यभिचारविरूद्धप्रकरणसमसाध्यसमकालातीता हेत्वाभासा इति सूत्रकारमतमाश्रित्य।

बौद्धनैयायिकसम्प्रदाये तु हेत्वाभासस्यत्रैविध्यमेव। तदुक्तंधर्मकीर्तिना ''असिद्धविरूद्धानैकान्तिका त्रयो हेत्वाभासा:। ''त्रिरूपं लिंगाख्यानं परार्थानुमानमित्युक्तम्। तत्र त्रयाणां रूपाणामेकस्यापिरूपस्यानुक्तौ साधनाभास:।'' जैनसम्प्रदायनयेऽपि असिद्धविरूद्धानैकान्तिका त्रयो हेत्वाभासा:। "रूपाद्यसिद्धितोऽसिद्धो विरूद्धोऽनुपपत्तिमान्। साध्याभावं बिना हेतु: व्यभिचारीविपक्षग:''। इति हेत्वाभासस्य त्रैविध्यं प्रतिपादितम्।

एतन्मते बाधस्य पक्षदोषेष्वन्तर्भाव: सत्प्रतिपक्षस्य दोषत्वासम्भवाच्च। अनुमानेप्रयुक्ते इषिते अनुमानान्तरस्यासम्भवात्। तुल्यबलेसाध्यतद्विपर्ययसाधकहेतुद्वये सत्यपि तत्र प्रकृतसाध्यसाधनयोर्व्याप्त्यनिश्चयेऽसिद्ध एवान्तर्भावसम्भवाच्च। अत्रेदं बोध्यमनेकान्तविरूद्धवादिभिरूपन्यस्य मानास्सर्व एव हेतवोऽसिद्धा इत्यनेकविध हेत्वाभास इति सिद्धसेनदिवाकरसूरय:। विरूद्ध एवेति मल्लवादिन:। समन्तभद्राचार्यास्तु अनैकान्तिका हेत्वाभासा: इत्याहु: शिष्टानां तत्रैवान्तर्भावात् तदुक्तम्—

''असिद्धसिद्धसेनस्य विरूद्धोमल्लवादिन:।
द्वेधासमन्तभद्रस्य हेतोरैकान्तसाधने।।

दिगम्बरपरम्परायामकिंचित्करोऽपि हेत्वाभासः। एवं रीत्या तत् सम्प्रदायमते चत्वार एव हेत्वाभासाः। प्रभाकरगुरूमते प्रकरणसमकालातीतयोः हेत्वाभासत्वं नास्तीति त्रित्वमेव हेत्वाभासानामिति। अर्थात् पूर्वोक्त त्रय एव हेत्वाभासाः।

शास्त्रदीपिकायां मीमांसकप्रवरेण पार्थसारथीमिश्रेणापि "असिद्धः अनैकान्तिकत्वं बाधत्वंचेति त्रयो हेतु दोषाः" इत्यादिना हेत्वाभासत्रैविध्यमेव प्रतिपादितमिति। आलंकारिकमते हेत्वाभासास्त्रिविधएव। तदुक्तं काव्यालंकारे भामहेन "हेतुस्त्रिलक्षणो ज्ञेया हेत्वाभासो विपर्ययादिति। एवमालंकारिका अपि त्रयो हेत्वाभासा इति प्रतिपादयन्ति।

सांख्येऽपि "त्रयोहेत्वाभासाः" इत्येवं स्वीकुर्वन्ति। वस्तुतः अन्वयव्यतिरेकि स्थले पक्षसत्वसपक्षसत्वविपक्षासत्वातिरिक्तः अबाधितत्वासत्प्रतिपक्षितत्त्वविशिष्ट एव हेतुः सद्धेतुः न तु मात्रपक्षसत्वसपक्षसत्वविपक्षासत्वविशिष्ट एव। अत एव तद्विरोधिहेत्वाभासस्यापि पंचविधत्वमवश्यं स्वीकरणीयमनया रीत्या सव्यभिचारविरूद्धसत्प्रतिपक्षाऽसिद्धबाधिताः पञ्चैव हेत्वाभासाः यथा गौतमेनोक्तम् "सव्यभिचारविरूद्धप्रकरणसमसाध्यसमकालातीताः हेत्वाभासाः" ।। इति।।



# बौद्धमतमुपस्थाप्यतत्समीक्षणम्

बौद्धदर्शने प्रत्यक्षानुमानभेदेन द्विविधम् प्रमाणम्। तत्र "कल्पनापोढ़मभ्रान्तं प्रत्यक्षम्" अर्थादभिलापसंसर्गयोग्यप्रतिभासाप्रतीतिः कल्पना तया रहितम् सज्ज्ञानं तदभ्रान्तं तत् प्रत्यक्षम्। अनुमानं द्विविधं स्वार्थानुमानपरार्थानुमानभेदेन। "येन स्वयं प्रतिपद्यते तत् स्वार्थं" "येनानुमानेन करणभूतेनानुमाता स्वयं प्रतिपद्यते परोक्षमर्थ तत्स्वार्थानुमानम्। अर्थात् "त्रिरूपतो लिंगादनुमेयार्थदर्शनं स्वार्थम्"। 'येन वाक्येन करणे न परे प्रतिवाच्यं प्रतिपादयति परोक्षमर्थं बोधयति तत्त्रिरूपलिंगाख्यानं वाक्यं परार्थानुमानम्। त्रिरूपं पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वरूपं तया विशिष्टं यद्धेतुः तत् सद्धेतुः। अनुमेयेलिंगस्यसत्त्वमेवपक्षसत्त्वम्। अनुमेयं तु 'जिज्ञासितविशेषधर्मी" जिज्ञासितोऽर्थात् ज्ञातुमिष्टो विशेषोधर्मोयस्यधर्मिणः सोऽनुमेयः। समानः पक्षः सपक्षः वा समानः रर सदृशः योऽर्थः पक्षेण स सपक्षः। अर्थात् पक्षातिरिक्तसाध्यस्य निश्चयः यत्र अस्ति तत्र हेतोः विद्यमानत्वम् सपक्षसत्त्वम्। यथा न्यायप्रवेशकसूत्रे 'साधयितुमिष्टोऽपि प्रत्यक्षादिविरूद्धः पक्षाभासाः तद्यथा प्रत्यक्षविरूद्धः, अनुमानविरूद्धः, आगमविरूद्धः, लोकविरूद्धः स्ववचनविरूद्धः, अप्रसिद्धविशेषणः, अप्रसिद्धविशेष्यः, अप्रसिद्धोभयः, प्रसिद्धसम्बन्धश्चेति एते पक्षाभासाः। 'त्रिरूपलिंगाख्यानं परार्थानुमानम्"।

'तत्र त्रयाणां रूपाणामेकस्यापि रूपस्यानुक्तौ साधनाभासा:" अथवा पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वानां रूपाणामेकस्याप्यनुक्तौ वा उक्तावपि असिद्धौ सन्देहे वा प्रतिवादिनः वादिनो च साधनाभासाः, स च हेत्वाभासा इति। अर्थात् त्रयाणां रूपाणां न्यूनता नाम साधनदोषः। न्यूनता नाम उर्णत्वमपरिपूर्णता।

यस्मादेकस्य द्वयोर्वानुक्तौत्रीणि परिपूर्ण प्रतिपादितानि न भवन्ति तस्मात् त्रयाणां न्यूनता। ननुहीनांगत्वं न साधनदोषः। विद्यमानेऽपि हिं रूपत्रये द्वयोरेकस्य वा वक्त्रानभिधानेसतिन्यूनतायाः सम्भवात्। तत्कथं वक्तृदोषः साधनदोष इत्युच्यते

इति चेत्। सत्यं केवलं नाम साधनशब्देन लिंगमभिहितम्। किंच तर्हि ? तत् प्रतिपादकं वाक्यं तस्य चापरिपूर्णता दोषो भवत्येव। वक्तृदोषस्तु निमित्तपरिपूर्णताया इतिकिमवद्यम्।

एवमुपलक्षणार्थत्वादस्य यथाऽन्यतमेनापि रूपेण हीनत्वान्यूनता साधनदोषस्तथा हेतूदाहरणादप्याधिक्यं साधनदोषो वार्तिकारस्याभिप्रेतः। अभयत्रापि त्वसाधनांगवचनाद् वादिना निग्रहो विवक्षितः।

स च साधनाभासाः असिद्धानैकान्तिकविरूद्धभेदात् त्रिविधाः। तत्र एकस्य रूपस्य धर्मिसम्बन्धस्यासिद्धौ सन्देहे वाऽसिद्धो हेत्वाभासः'' तथाच पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वेषु रूपेष्वेकस्य रूपस्य (धर्मिणिसत्त्वं हेतोः) असिद्धौ सन्देहे वा असिद्धसंज्ञको हेत्वाभासः। सचचतुर्विधः उभयासिद्धः, अन्यतरासिद्धः, सन्दिग्धासिद्धः आश्रयासिद्धश्चेति यथा अनित्यः शब्द इति साध्ये चाक्षुषत्वमुभयासिद्धम्। चेतनास्तरव इति तरूणांचैतन्ये साध्ये सर्वत्वमपहरणे मरणं बौद्धस्यासिद्धम्, विज्ञानेन्द्रियायुर्निरोधलक्षणस्य मरणस्यानेनाभ्युपगमात्, तस्यच तरूष्वसम्भवात्''। रूपादिविज्ञानोत्पत्त्या यदनुमितं कायान्तर्भूतं चक्षुगोलकादिस्थितं रूपं तदिन्द्रियम्। आयुरिति लोके प्राणाः उच्यन्ते, न चागमसिद्धमिहयुज्यते वक्तुम्। अतः प्राणस्वभावमायुः। तेषां निरोधो निवृत्तिः। सलक्षणं तत्त्वं यस्य तत् यथोक्तम्। यथाभूतस्य मरणस्य अनेन बौद्धेन प्रतिज्ञातत्वात्।

न च यदिनामैव तथापि कथमसिद्धमिति वाच्यम्। तस्य च विज्ञानादिनिरोधत्मकस्य तरूष्वसम्भवात्। सत्तापूर्वकोनिरोधः। ततश्च यो विज्ञाननिरोधं तरूष्विच्छेत् सकथं विज्ञानं नेच्छेत्। तस्मात् विज्ञानानिष्टे निरोधोऽपि नेष्टस्तरूषु।

ननुं शोषोऽपि मरणमुच्यते। स च तरूषु सिद्धः। सत्त्वम्। केवलं विज्ञानसत्तयाव्याप्तं तत् तदिह हेतुः विज्ञाननिरोधश्च तत् सत्तया व्याप्तः। न शोष मात्रः तत्तयोः यन्मरणं हेतुः तत् तरूष्वसिद्धम् यत्तु सिद्धं शोषात्मकं तदहेतुः। दिगम्बरस्तु साध्येन व्याप्तमव्याप्तं वा मरणमविविच्य मरणमात्रं हेतुः। तदस्य वादिनो हेतुभूतं मरणं न ज्ञातम्। अज्ञानात् सिद्धं शोषरूपं, शोषरूपस्य

मरणस्य तरूषु दर्शनात्। प्रतिवादिनस्तु ज्ञातमतोऽसिद्धम्। यदा तु वादिनोऽपि ज्ञातं तदा वादिनोऽप्यसिद्धं स्यात् इति न्याय:।

कृतकत्वादिति शब्दाभिव्यक्तिवादिनां प्रत्यन्तरासिद्ध:। हेतोरात्मन: आश्रयस्य सन्देहे सन्दिग्धासिद्ध: हेत्वाभास:। यथा वाष्पादि भावेन संदिह्यमानोभूतसंघातोऽग्निसिद्धावुपदिश्यमान: सन्दिग्धासिद्ध:। वाष्प: आदिर्यस्य स वाष्पादि:, तद्भावेन वाष्पादित्वेन संदिह्यमानो भूतसंघात इति भूतानां पृथिव्यादीनां संघात: समूह:। अग्निसिद्धौ अग्निसिद्ध्यर्थमुपादीयमानोऽसिद्ध:। एतदुक्तं भवति यदाधूमोऽपि वाष्पादित्वेन सन्दिग्धो भवति तदाऽसिद्ध:, गमकरूपानिश्चयात्। धूमतया निश्चितो वह्निजन्यत्वात् गमक:। यदा तु सन्दिग्ध: तदा न गमक इत्यसिद्धताख्यो दोष:।

आश्रयासिद्धं यथा— इह निकुंजे मयूर: केकायितात्'' निकुंजधर्म्यां मयूर: साध्यते तत्र केकायित हेतु:। निकुंजनाम पर्वतो परिभागेन तिर्यङ्निर्गतेन प्रच्छादित: भूभाग:। केकायितं रर मयूरध्वनि:। कथमाश्रयणासिद्ध: तदा उच्यते 'तदापातदेशविभ्रमे'' अर्थात् केकायितस्यागमनं तस्य देश:, स उच्यते यस्माद्देशादागच्छति केकायितं तस्यव्यामोहे सत्ययमाश्रयणासिद्ध:। निरंतरेषु वहुषु निकुंजेषु सत्सु यदाकेकायितापातनिकुंजे विभ्रम: किमस्मान्निकुंजात् केकायितामागतमाहोस्विदन्यस्मादिति, तदाऽयमाश्रयणासिद्ध:।

यत्र तु धर्मिणि साध्यं साधयितुमारब्धं तस्य धर्मिणि प्रमाणबाधित्वे आश्रयासिद्धिहेतोर्दूषणम्। धर्मकीर्तिना न्यायबिन्दुग्रन्थे उटंकितम् यत् ''धर्म्यसिद्धावप्यसिद्ध: यथा सर्वगत: आत्मा सर्वत्रोपलभ्यमानगुणत्वात्। तदिहबोधस्यात्मैव न सिद्ध:, किं पुनरस्य सर्वदेशोपलभ्यमानगुणत्वं सेत्स्यति। तथाहि तैर्थिका: खल्वेवं ब्रुवन्ति। शरीरादिवस्तुव्ययातिरिक्तं शुभाशुकर्तृतत्फलभोक्तृनित्यव्यापिरूपमात्माख्यं द्रव्यान्तरमस्ति। तेन च यदि नाम विश्वं व्याप्तं तदपि यदुपभोगायतनतया परेण परिगृहीतं जीवच्छरीरं तदेव सात्मकमभिधीयत इति। एतच्चायुक्तमात्मन: सिद्धये प्रमाणाभावात्। नहि

प्रत्यक्षेणात्मा प्रतीयते चक्षुरादिज्ञानानां रूपादिविषयपंचकनियतत्वात्। मानसस्याप्यहं प्रत्ययस्य शरीरादिविषयत्वात गौरोऽहंस्थूलोऽहं गच्छाम्यहं इत्याद्याकारेणाहं प्रत्यय उत्पद्यते। यदाह— अलंकारकार:

"अहमित्यपियज्ज्ञानं तच्छरीरेन्द्रियांशवित्।
अहं काणस्सुखीगौर: सामानाधारवेदनात्।।"

न चास्यशरीरव्यतिरिक्तस्य तद्धर्मो गौरत्वं स्थूलत्वं वा, न च विभोरभूतस्यमूर्तद्रव्यानुविधायिनी गमनक्रियायुक्तिमती। न चायं माणवके सिंहे प्रत्यय इव भाक्तो युक्त:, स्खलद्वृत्तिप्रसंगात्। नाप्यनुमाने प्रतीयते, कार्य—स्वभावलिंगाभावात्। नित्यपरोक्षेण देशकालाकारव्यतिरेकविकलेनात्मना सह कस्यचिदन्वयव्यतिरेकात्मककार्यकारणभावासिद्धे: कार्यलिंगायोगात्। धर्मिसत्तायाश्चसिद्धत्वात् स्वभावलिंगानुपपत्ते:। न चान्यलिंगमस्ति। अन्येनापि लिंगेन भवतासाध्यव्याप्तेन भविततव्यम्। तस्य च सर्वथा असिद्धे: कथं तेन व्याप्तत्वं लिगस्य निश्चीयताम्? किंच किमयमात्मा बोधरूप:, अबोधरूपोवा? यदि बोधरूपो नित्यश्च तदा चक्षुरादिवैफल्यप्रसंगो दुर्वार:। अथानित्यो बोधरूपस्तदा ज्ञानस्यैवात्मेति नामकृतम्, न विप्रतिपत्ति:, अथाबोधरूपो दृश्यश्च तदाऽनुपलम्भोऽस्य सत्ता न क्षमत इति निरात्मसिद्धिरनवद्या। तस्मात् सर्व संस्कृतं, वस्तुत: निरात्मकमिति।

न्यायविन्दुनामाख्ये ग्रन्थे धर्म्यसिद्धस्योल्लेखो वर्तते किन्तु बौद्धतक्रभाषायामाश्रयासिद्धिदोषस्यैवोल्लेख:, न तु धर्म्यसिद्धस्योल्लेख: किन्तु धर्म्यसिद्ध एवाश्रयासिद्ध उच्यत इति। तेन नाश्रयासिद्धो नामान्यप्रभेद इति। सर्वेष्वप्यसिद्धेष्वेकं रूपं पक्षधर्मत्वमसिद्धमपि असिद्धो हेत्वाभास:।

बौद्धतर्कभाषायामनैकान्तिकहेत्वाभासस्य सामान्यलक्षणमित्थं वर्तते 'व्याप्त्यनिश्चये हेतोरनैकान्तिको दोष:" इति। 'एकस्य रूपस्यासपक्षेऽसत्त्वस्यासिद्धावनैकान्तिको हेत्वाभास" इति। अर्थात् तत्र विपक्षासत्त्वस्यासिदावनैकान्तिक: यथा पर्वतो धूमवान् वह्नेरित्यादौ विपक्षासत्त्वस्य

वह्नौ (अयोगोलकेवह्निदर्शनेन) असिद्ध अत एव स हेतुरनैकान्तिक:।

अनैकान्तिकशब्दस्य व्युत्पत्तिस्तु एकोऽन्त: एकान्तो निश्चय: (एक इति ब्रुवन् एकस्तासौ साध्यलक्षणैकार्थविषयत्वादन्तश्च कथावसान हेतुत्वात्) स प्रयोजनमस्ति इत्यैकान्तिक:, नैकान्तिको अनैकान्तिक:। यस्मान्न साध्यस्य न विपर्ययस्य निश्चयोऽपि तु तद्विपरीत: संशय:। साध्येतरयो: संशयहेतुरनैकान्तिक इति। तस्य त्रिधा विभाग: तर्कभाषाकरेण कृत:। साधारणानैकान्तिक: असाधारणानैकान्तिक:, सन्दिग्धविपक्षव्यावृत्तिकश्चेति। तत्र साधारणानैकान्तिको यथा सात्मकं जीवच्छरीरम्, प्राणादिमत्त्वात् अपरजीवच्छरीरवत् घटवत्। अयं हेतु परजीवच्छरीरेऽनात्मनाव्याप्त इति न निश्चीत:। घटे च विपक्षे आत्मनोऽभावान्निवृत्त इति न निश्चीत:, धर्मिणो च जीवच्छरीरे विद्यत इति साधारणानैकान्तिक उच्यते, अपरश्चासाधारणो यथा अनित्य: शब्द: श्रावणत्वात्, घटवत् आकाशवदिति। साधारणानैकान्तिको यथा नित्य: शब्द: प्रमेयत्वात्, घटवत् आकाशवदिति। सन्दिग्धविपक्षव्यावृत्तिको यथा स: श्याम: तत्पुत्रत्वात्, परिदृश्यमान तत् पुत्रवदिति। यथा चास्य रूपस्यासिद्धावनैकान्तिकस्तथा अस्यैव विपक्षासत्त्वाख्यस्य रूपस्य सन्देहेऽप्यनैकान्तिक एव'' सचानैकान्तिक सन्दिग्धविपक्षव्यावृत्तिकल्प:। यथा असर्वज्ञ: कश्चित् विवक्षित: पुरूषो रागादिमान् वेति साध्ये वक्तृत्वादिको धर्म: अनैकान्तिक:। असर्वज्ञत्वं साध्यम्। कश्चिद् विवक्षित इति वक्तुरभिप्रेत: पुरूषो धर्मी। राग आदिर्यस्यद्वेषादे: स रागादि:। स यस्यास्ति स रागादिमान् इति द्वितीयं साध्यम्। तत: असर्वज्ञत्वे रागादिमत्त्वे वा साध्ये प्रकृते वक्तृत्वं वचनशक्तिस्तदादिर्यस्योन्मेषनिमेषादे: स वक्तृत्वादिको धर्मोऽनैकान्तिक:।

सन्दिग्धाद् विपक्षाद् व्यावृत्तिर्यस्य स सन्द्रिग्धविपक्षव्यावृत्तिक:। असर्वज्ञत्वे साध्ये सर्वज्ञत्वं विपक्ष: तत्र वचनादे: सत्त्वमसत्त्वं वा सन्दिग्धम्। सर्वज्ञो वक्ता नोपलभ्यते तत्कथं वचनं सर्वज्ञे सन्दिग्धमितिशंकानिराकरणार्थं धर्मकीर्ति: प्रतिपादयति यत्— 'सर्वज्ञो वक्ता नोपलभ्यते'' इत्येवं प्रस्अनुपलम्भस्यादृश्यात्मविषयत्वेन सन्देहहेतुत्वात्। ततोऽसर्वज्ञ विपर्ययात् वक्तृत्वादे: व्यावृत्ति: सन्दिग्धा:।

वक्तृत्वसर्वज्ञत्वयोः विरोधाभावाच्च यः सर्वज्ञः स वक्त्रा न भवतीत्यदर्शनेऽपि व्यतिरेको न सिद्ध्यति, सन्देहात्। नानुपलम्भात् सर्वज्ञे वक्तृत्वमसद् ब्रूमः। अपितु सर्वज्ञत्वेन सह वक्तृत्वस्य विरोधात्। एतन्न सर्वज्ञत्ववक्तृत्वयोः विरोधो नास्ति। साध्याभावरूपं सर्वज्ञत्वमनूद्य "स वक्ता न भवति" इति साधनस्य वक्तृत्वस्याभावो विधीयते। तेन साध्याभावः साधनाभावे नियतत्वात् साधनाभावे व्याप्तः व्याप्तिमानीदृशो व्यतिरेको विरोधे सति वक्तृत्वसर्वज्ञत्वयोः सिद्ध्येत। न चास्ति विरोधः। तत् सन्देहात् व्यतिरेकासिद्धः। न्यायविन्दुग्रन्थे धर्मकीर्तिना असाधारणानैकान्तिकस्य हेत्वाभासस्य स्वरूपमित्थं विहितम्— "अनयोरेवद्वयोरूपयोः सन्देहेऽनैकान्तिकः" अर्थादन्वयव्यतिरेकरूपयोः संशयादसाधारणानैकान्तिको हेत्वाभासः। यथा सात्मकं जीवच्छरीरं प्राणादिमत्त्वात्" सहात्मना वर्तते सात्मकं साध्यम्। शरीरमितिधर्मी जीवद्ग्रहणं धर्मिविशेषणं, प्राणाः श्वासादयः आदिर्यस्य उन्मेषनिमेषादेः प्राणिधर्मस्य स प्राणादिः। स यस्याति तत् प्राणादिमत् जीवच्छरीरम्। तस्य भावस्तत्वम्। तस्मात् पक्षधर्मस्य च द्वाभ्यां कारणाभ्यां संशयहेतुत्वम्। संशयविषयौ यावाकारौ ताभ्यां सर्वस्य वस्तुनः संग्रहात्। तयोश्च व्यापकयोराकारयोरेकत्रापि वृत्यनिश्चयात्। याभ्यां ह्याकाराभ्यां सर्वं वस्तुनः संगृह्यते तयोराकारयोर्न संशयः। प्रकारान्तरसंभवे हिपक्षधर्मो धर्मिणमवियुक्तं द्वयोरेकेन धर्मेण दर्शयितुं न शक्नुयात्। अतो न संशयहेतुः स्यात्। द्वयोधर्मयोरनियतं भावं दर्शयन् संशय हेतुः। द्वयोस्तु अनियतमपि भावं दर्शयितुमशक्तोऽप्रतिपत्तिहेतुः। नियतं तु भावं दर्शयन् सम्यग् हेतुः विरूद्धो वा स्यात्। तस्मात् द्वाभ्यां सर्वं वस्तु संगृह्यते तयोः संशयहेतुर्यदि तयोरेकत्रापि सद्भाव निश्चयो न स्यात्।

सद्भावनिश्चये तु यद्येकत्र नियतसत्तानिश्चयो हेतुर्विरूद्धो वा स्यात्। अनियतसत्तानिश्चये तु साधारणानैकान्तिकः, सन्दिग्धविपक्षव्यावृत्तिकः सन्दिग्धान्वयोऽसिद्धव्यतिरेको वा स्यात्। एकत्रापि तु वृत्त्यनिश्चयाद— साधारणानैकान्तिको भवति। ततोऽसाधारणानैकान्तिकस्यानैकान्तिकत्वे हेतुद्वयं

दर्शयति न्यायबिन्दुकार:——

'न हि सात्मकनिरात्मकाभ्यामन्योराशिरस्तियन्नायं प्राणादिवर्तते।''

कस्मादन्यराश्यभाव: तदा उच्यते ''आत्मनो वृत्ति: व्यवच्छेदाभ्यां सर्वसंग्रहात्'' आत्मनो वृत्ति: सद्भावो व्यवच्छेदाभाव:। ताभ्यां सर्वस्य वस्तुन: संग्रहात् क्रोडीकरणात्। यत्र ह्यात्मा अस्ति तत् सात्मकम्, अन्यन्निरात्मकम्। ततो नान्यो राशिरस्ति इति संशयहेतुत्वकारणम्। आत्मव्यवच्छेदरूपाभ्यामाकाराभ्यां सर्ववस्तुसंग्रहं प्रतिपाद्य द्वितीयमाह—— 'नाप्यनयोरेकत्रवृत्तिनिश्चय:''

नाप्यनयो: सात्मकानात्मकयोर्मध्य एकत्र सात्मकेऽनात्मके वा वृत्ते: सद्भावस्यनिश्चयोऽस्ति। द्वावपि राशीत्यक्त्वा न वर्तते प्राणादि:। वस्तुधर्मत्वात्। ततश्चानयोरेव वर्तते इत्येतावदेव ज्ञातम्। विशेषे तु वृत्तिनिश्चयो नास्तीति।

''सात्मकत्वेनाऽनात्मकत्वेन वा प्रसिद्धे प्राणादेरसिद्धे:।''

सात्मकत्वेनानात्मकत्वेन वा विशेषेण युक्ते प्रसिद्धे निश्चिते वस्तुनि प्राणादेर्धर्मस्य सर्ववस्तुव्यापिनो: प्रकारयोरेकत्र नियतसद्भावस्यासिद्धेरनैकान्तिक: अनिश्चितत्वात्।

तदेवमसाधारणस्य धर्मस्यानैकान्तिकत्वे कारणद्वयमभिहितम्। पक्षधर्मश्च भवन् सर्व: साधारणोऽसाधारणो वा भवत्यनैकान्तिक: तर्हि किं नाम पक्षधर्मत्वमिति दर्शयति सूत्रकार: ''तस्माज्जीवच्छरीरसम्बन्धी प्राणादि: सात्मकादनात्मकाच्च सर्वस्माद् व्यावृत्तत्वेन असिद्धेस्ताभ्यां न व्यतिरिच्यते'' अर्थात् जीवच्छरीरस्य सम्बन्धीपक्षधर्म:। यस्मात् तयोरेकत्रापि न निवृत्ति: निश्चयस्तस्मात् ताभ्यां न व्यतिरिच्यते। वस्तुधर्मे हि सर्ववस्तु व्यापिनो: प्रकारयोरेकनियतसद्भावो निश्चित: प्रकारान्तरान्निवर्तेत। प्राणादिस्तावत् कुत्रचित्घटादेर्निवृत्त एव।

''अन्वयव्यतिरेकयोरन्योन्यव्यवच्छेद्य रूपत्वात्। तत् एवान्वयव्यतिरेकयो: सन्देहादनैकान्तिक:'' कचिदन्वयव्यतिरेकयोर्नभावनिश्चयो नाप्यभावनिश्चय: तत एवान्वयव्यतिरेकयो: सन्देहाच्चानैकान्तिक:। एवं क्वचिदप्यन्वयव्यतिरे-कयोरेकस्याप्यभावनिश्चय: स्यात्, तदेव द्वितीयस्य भावनिश्चय

इत्यन्वयव्यतिरेकयोः सन्देह एव न स्यात्। यतश्च न क्वचित् भावाभावनिश्चयस्तत एवान्वयव्यतिरेकयोः सन्देहः। सन्देहाच्चानैकान्तिकः।

''न्यायप्रवेशकसूत्रम्'' इत्याख्ये बौद्धन्यायस्य प्रवेशिकात्मिकाग्रन्थेऽनैकान्तिकत्वस्य षड्भेदः दिग्दर्शितः। साधारणः, असाधारणः, सपक्षैकदेशवृतिर्विपक्षव्यापी, विपक्षैकदेशवृत्तिः सपक्षव्यापी, उभयपक्षैकदेशवृत्तिः, विरूद्धाव्यभिचारी चेति। तत्र साधारणः शब्दः प्रमेयत्वात् नित्य इति। तद्धिनित्यानित्यपक्षयोः साधारणत्वादनैकान्तिकम्। किं घटवत् प्रमेयत्वादनित्यः शब्दः आहोस्विदाकाशवत् प्रमेयत्वान्नित्य इति। असाधारणः श्रावणत्वादनित्य इति। तद्धि नित्यानित्यपक्षाभ्यां व्यावृतत्त्वान्नित्यानित्यविनिर्मुक्तस्य चान्यस्यासम्भवात् संशयहेतुः। किं भूतस्यास्य श्रावणत्वमिति। सपक्षैकदेशवृत्ति विपक्षव्यापी यथा अप्रयत्नानन्तरीयकः शब्दः अनित्यत्वात्, विद्युदाकाशवत् घटवत्। अत्र अप्रयत्नानन्तरीयकः पक्षः। अस्य विद्युदाकाशादिः सपक्षः। तत्रैकदेशे विद्युदादावनित्यत्वं विद्यते नाकाशादौ। अस्य घटादिः विपक्षः। तत्र सर्वत्र घटादौ अनित्यत्वं विद्यते। तस्मादेतदपि विद्युत् घटसाधर्म्येणानैकान्तिकम्। प्रयत्नानन्तरीयकः शब्दः अनित्यात् घटवत् विद्युदाकाशवच्चेत्यनित्यत्वं सपक्षे सर्वत्रघटादौ वर्तते। विपक्षैकदेशे विद्युदादौ वर्तते नाकाशादौ। तस्मादेतदपि विद्युत्घटसाधर्म्येण पूर्ववदनैकान्तिकम्। उभयैकदेशवृत्तिर्यथा नित्यः शब्दः अमूर्तत्वात् आकाशपरमाणुवत्, कर्मवच्च। नित्यः पक्षः अस्याकाशपरमाण्वादिः सपक्षः। तत्रैकदेशाकाशादौ विद्यते अमूर्तत्वं न परमाणौ। अस्य घट सुखादिः विपक्षः। तत्रैकदेशे सुखादौ विद्यते अमूर्तत्वं न घटादौ तस्मादेतदपि सुखाकाशसाधर्म्येणानैकान्तिकम्।

एतदतिरिक्तस्यानैकान्तिकस्योल्लेखः धर्मोत्तरेण ''धर्मोत्तराप्रदीपटीकायां कृतः। सपक्षविपक्षव्यापिरूपः यथा अनित्यः शब्दः प्रमेयत्वात् घटवत् आकाशवदिति प्रमेयत्वं सपक्षविपक्षव्यापि। अन्यदपि—— ''द्वयोः रूपयोरेकस्यासिद्धावपरस्य च सन्देहेऽनैकान्तिकः''

तथाच सपक्षसत्त्वविपक्षासत्त्वयोः मध्ये एकस्यासिद्धौ अपरस्य सन्देहेऽनैकान्तिकः। यथा वीतरागः कश्चित् सर्वज्ञो वा वक्तृत्वादित्यत्र वीतरागत्वमेकं साध्यम्। सर्वज्ञत्वं वेति द्वितीयम् वक्तृत्वादिहेतुरत्र सपक्षासत्त्वस्य सन्देहः वर्तते। अपि च विपक्षासत्त्व एवासिद्धः अतोऽनैकान्तिकः।

ननु व्याप्त्यादिसिद्धिरपि दूषणम्, तेनापि परेष्टार्थासिद्धेः। तत्किं नोच्यते? अनैकान्तिकदूषणेनैव गतार्थत्वात् पृथङ्नोक्तम्। तथाहि न स्वलक्षणाभ्यां व्याप्तिर्ग्रहीतुं शक्या स्वलक्षणस्य देशकालाकारनियतत्वेनाप्यन्यत्रानुगमाभावात्। अपि तु साध्यसाधनसामान्याभ्यामेव व्याप्ति र्ग्रहीतव्या। तत्र च यदि साधनं साध्येन व्याप्तं न प्रतीयते तदा साधनं च स्यात् साध्यं च न स्यादित्यनैकान्तिकमेव भवति।

"द्वयोः रूपयोः विपर्ययसिद्धौ विरूद्धः" अर्थात् सपक्षेसत्त्वस्य असपक्षे चासत्वस्य रूपद्वयोः अभावसिद्धौ विरूद्धहेत्वाभासः। यथा कृतकत्वं प्रयत्नानन्तरीयकत्वं च नित्यत्वे साध्ये विरूद्धो हेत्वाभासः। कृतकत्वमिति स्वभाव हेतुः। प्रयत्नान्तरीयकत्वमिति कार्यहेतुः। प्रयत्नानन्तरीयकशब्देन हि प्रयत्नानन्तरं जन्मज्ञानं च प्रयत्नानन्तरीयकमुच्यते जन्मजायमानस्य स्वभावः। ज्ञानं ज्ञेयस्य कार्यम् तदिह प्रयत्नान्तरं ज्ञानं गृह्यते। तेन कार्यहेतुः विरूद्धलक्षणे यत्विपर्ययसिद्धिमुक्तं तत्तु सपक्षेऽसत्त्वम् विपक्षे च सत्त्वमित्यात्मकरूपम्। "एतौच साध्यविपर्ययसाधनविरूद्धौ"। तत्र च तृतीयोऽपीष्टः विघातकवद् विरूद्धः तृतीयोऽयमिष्टस्य शब्देनानुपात्तस्य विघातं करोति विपर्ययसाधनादिति इष्टविघातकृत्। यथा परार्थस्चक्षुरादयः संघातत्वात् छयनासनाद्यंगवदिति"। चक्षुरादय इति धर्मी। परोऽर्थः प्रयोजनं परार्थः प्रयोजकः संस्कार्य उपकर्त्तव्यो येषां ते परार्थाः इति साध्यम्। संघातत्वादर्थात् संचित्रूपत्वादिति हेतुः। चक्षुरादयो हि परमाणुः संचितरूपाः ततः संघातरूपा उच्यते। शयनमासनं चादिः यस्य तच्छयनासनादिः। तदेवांगं पुरूषोपभोगांगत्वात्। अयं व्याप्तिप्रदर्शनविषयो दृष्टान्तः। अत्र हि पारार्थ्येन संहतत्वं व्याप्तम्। यतः शयनासनादयः संघातरूपाः पुरूषस्य

भोगिनो भवन्त्युपकारका: इति परार्था उच्यते। कथमयमिष्टविघातकृदिति शंकाया: निराकरणं धर्मकीर्ति: करोति— "तदिष्टासंहतपारार्थ्यविपर्ययसाधनात् विरूद्ध:"।

असंहते विषये पारार्थ्यमसंहतपारार्थ्यम्। तस्य सांख्यस्यवादिन: इष्टमसंहत पारार्थ्यम्, तस्य विपर्यय: संहतपारार्थ्यनाम। तस्यसाधनात् विरूद्ध आत्मा अस्ति इति ब्रुवाण: सांख्य:, "कुत एतद्" इति पर्यनुयुक्तो बौद्धेनेदमात्मन: सिद्धय प्रमाणमाह— तस्मादसंहतस्यात्मन उपकारकत्वं साध्यं चक्षुरादिनाम्। अयं तु हेतु: विपर्यय व्याप्त:। यस्याद्यो यस्योपकारक: स तस्यजनक:। जन्यमानश्च युगपत्क्रमेण वा भवति संहत:। तस्मात् परार्थश्चक्षुरादय: संहतपरार्था इति सिद्धम्। अयं च विरूद्ध आचार्यदिग्नागेनोक्त:। अस्यान्तर्भाव: पूर्वविपर्ययसिद्धघटित विरूद्धलक्षणे एव। न्यायबिन्दुकार: हेत्वाभासान्प्रतिपाद्य अन्ते हेत्वाभासभेदान् प्रतिपादयति—

"एवमेषां त्रयाणां रूपाणामेकैकस्य द्वयोर्द्वयोर्वारूपयोरसिद्धौ सन्देहे वा यथायोगमसिद्धविरूद्धानैकान्तिकस्त्रयो हेत्वाभासा:" इति। बौद्धन्यायस्य "न्यायप्रवेशकसूत्रे विरूद्धस्य चतुर्भेदा: वर्तन्ते। तद्यथा धर्मस्वरूपविपरीतसाधन:। धर्मविशेषविपरीतसाधन:। धर्मीस्वरूपविपरीतसाधन:। धर्मीविशेषविपरीतसाधनश्चेति। आचार्यदिङ्नागेन "विरूद्धाव्यभिचारी" इत्यपि साधनदोष इत्युक्त:। यथान्यायबिन्दुग्रन्थे धर्मकीर्तिना प्रतिपादितम् यत् "तस्मादवस्तु दर्शनबलप्रवृत्तमागमाश्रयमनुमानमाश्रित्य तदर्थविचारेषु विरूद्धाव्यभिचारी साधनदोष: उक्त:। अर्थात् दिङ्गनागेनविरूद्धाव्यभिचारी नामकसाधनाभास: स्वीक्रियते किन्तु अनुमानसंभव: सोऽनुमानस्य विषय: अर्थात् अनुमानस्य विषय: प्रमाणसिद्धित्रैरूप्यम्। प्रमाणसिद्धिर्हि त्रैरूप्ये प्रस्तुते स एव हेत्वाभास: सम्भवति यस्य प्रमाणसिद्ध रूपम्। न च विरूद्धाव्यभिचारिण: प्रमाणसिद्धमस्तिरूपमिति वाच्यम्

"अनुमानविषयेऽसम्भवात्" इति।

बौद्धमतेपक्षसत्वसपक्षसत्वविपक्षासत्वविशिष्ट एव हेतु: सद्धेतुपदवाच्य:। अस्मात् कारणात् बौद्धनये त्रय एव हेत्वाभासा:। यथा पक्षसत्वाभावेऽसिद्धनामकहेत्वाभास:। सपक्षसत्वाभावे वा विपक्षसत्वाभावे

अनैकान्तिकविरूद्धौ हेत्वाभासौ। अनैकान्तिकविरूद्धौ हेत्वाभासौ। न्यायनये व्याप्तिविशिष्टहेतवः सद्धेतवः, ते च केवलान्वयिकेवलव्यतिरेकि–अन्वयव्यतिरेकिभेदेन त्रिविधा। तत्रान्वयव्यतिरेकि हेतुः पंचरूपोपपन्नः सन् स्वसाध्यसाधयितुं क्षमः पंचरूपाणि पक्षसत्वसपक्षसत्वविपक्षासत्वऽबाधि–तत्वाऽसत्प्रतिपक्षितत्वात्मिकानि, तानि धूमे विद्यन्ते। केवलान्वयिहेतुस्तु चतुरूपोपपन्न एव स्व साध्यं साधयति तस्य विपक्षासिद्धेः विपक्षासत्वमपि अप्रसिद्धम्। यथा–घटोऽभिधेयः प्रमेयत्वात् इत्यत्र प्रमेयत्वहेतोः विपक्षविरहात्। केवलव्यतिरेकिहेतुरपि चतुरूपोपपन्न एव स्वसाध्यं साधयति, तस्य सपक्षाऽप्रसिद्धेः। एतत्पंचरूपाणां मध्यत एकेन द्वाभ्यां त्रिभिर्वोपपन्नत्वेन ये हेतुवदाभासन्ते ते हेत्वाभासा इति कथ्यन्ते। ते च सव्यभिचारविरूद्धसत्प्रतिपक्षितासिद्धबाधिताश्चेति पंच। दोषारपि व्यभिचारविरोधसत्प्रतिपक्षाऽसिद्धिबाधाः पंच। तैः दोषैर्विशिष्टा दुष्टा हेतवः।·स्वज्ञान विषयप्रकृतहेतुतावच्छेदकवत्वसम्बन्धेन।

वस्तुतः बौद्धनये पक्षसत्वसपक्षसत्वविपक्षासत्वविशिष्टहेतु एव सद्धेतुः इति न समीचीनम्। यतो हि त्रिरूपविशिष्टहेतुः वर्तते तत्र यदि सत्प्रतिपक्षबाधरूपाख्यः दोषः वर्तते तर्हि न सद्धेतुः, अपितु हेत्वाभास एव । अत अबाधित्वाऽसत्प्रतिपक्षितत्वाख्यं रूपमवश्यमभ्युपेयम्। अन्यथा अन्वयव्यतिरेकि स्थले दशाविशेषे असत्प्रतिपक्षितत्वाद्यभावेऽपि सद्धेत्वापत्तिः।

अत एव सद्धेतौ पंचरूपस्यापेक्षितत्वात् पंचैव हेत्वाभासा इत्येवं मतं समीचीनम् प्रतिभाति।



# जैनाङ्गीकृतहेत्वाभासविमर्शः

जैनारपि बौद्धमते यथा "त्रय एव हेत्वाभासाः" तथैवं स्वीकुर्वन्ति तेऽपि त्रिरूपविशिष्ट एव हेतुः सद्धेतु पदवाच्यः। द्वयोः साम्यं परिलक्ष्यते दृश्यते च । तैरपि हेतुवदाभासन्ते इति हेत्वाभासाः दुष्टहेतवः। हेतुस्वरूपस्य निश्चितव्याप्तिमत्वस्याप्रतीतिविपर्याससन्देहैः पंचम्यत्वेन च हेतोरिवाभासमानत्वादसिद्धादीनाम् हेत्वाभासत्वमवसेयमेवं स्वीकुर्वन्ति। तथाचासिद्धविरूद्धानैकान्तिकास्त्रयो हेत्वाभासा इति।

यथा न्यायवार्तिके---

पक्षधर्मतदंशेन व्याप्तो हेतुः त्रिधैव सः।
अविनाभावनियमात् हेत्वाभासास्ततोऽपरे।।

अन्यच्च---

रूपाद्यसिद्धितोऽसिद्धो विरूद्धोऽनुपपत्तितः।
साध्याभावं विना हेतुः व्यभिचारी विपक्षगः।।

जैनन्यायेऽपि सिद्धसेनदिवाकरसूरयोऽपि साकल्येनासिद्धत्वात् सकल एव हेतुरसिद्ध एव। मल्लवादिनस्तु नयचक्रविधातुर्मतेन सकल एवैकान्तसाधनो हेतुविरूद्ध इति। अनेकान्तात्मकवस्तुविपर्ययसाधनात्।

अनैकान्तिकासिद्धावपि साध्यनिश्चयविपर्ययसाधनात् विरूद्धाविति तथाहि निश्चयेन सहाप्रतिपत्तिसन्देहावपि विरूद्धावेव। तदविनाभूतौ चासिद्धानैकान्तिकाविति सकल एव हेतुः विरूद्ध इति।

समन्तभद्रास्तु प्रतिबन्धविकलानां सर्वेषामेव हेतुनां व्यभिचारित्वं मन्यन्ते। न चैकान्तसामान्ययोः विशेषयोः वा प्रतिबन्धः उत्पद्यते तथाहि– सामान्ययोः एकान्तेन नित्ययोः परस्परमनुपकार्योपकारकभूतयोः' कः प्रतिबन्धः। विशेषयोस्तु नियतदेशकालयोः प्रतिबन्धग्रहेऽपि तत्रैव तयोः ध्वंसात् साध्यधर्मिण्यगृहीतप्रतिबन्ध एवान्यो विशेषो हेतुत्वेनोपहीयमानः कथं नानैकान्तिकः। तस्मात् समानपरिणामस्यैव

सामान्यविशेषात्मनो हेतोरनैकान्तात्मनि साध्ये गमकत्वम्।

तदुक्तम्–

असिद्धः सिद्धसेनस्य विरूद्धोमल्लवादिनः।
द्वेधासमन्तभद्रस्य हेतोरेकान्तसाधने।।

धमभूषणेनोक्तम् यदसिद्धविरूद्धानैकान्तिकाकिंचित्कराः हेत्वाभासाः" इति हेत्वाभासानां चातुर्विध्यं प्रतिपादितम्। तन्न। सिद्धसाधनबाधित विषयश्चेति द्विविधस्याप्यप्रयोजकाह्वयस्य तस्य प्रतीतिनिराकृताख्यपक्षाभासाभेदानतिरिक्तत्वात्। "तत्राप्रतीयमानस्वरूपो हेतुरसिद्धः" इति जैनतर्कभाषाकाराः। स्वरूपात्प्रतीतिश्चाज्ञानात् सन्देहात् विपर्ययाद् वा। श्रीमदविजयलब्धिसूरीश्वरस्तु "हेतु स्वरूपाप्रतीतिप्रयुक्ताप्रतीतिव्याप्तिकोहेतुरसिद्धः"। अप्रतीतिव्याप्तिको हेतुरिति हेतोः सत्वासिद्धौ सन्देहे वा अप्रतीतव्याप्तिकः। न तु व्याप्तेः वैपरीत्येन निश्चयात् संशयात् वा अप्रतीतव्याप्तिकः, तादृशस्य विरूद्धानैकान्तिकत्वात् तदेतत् सूचयितुं हेतुस्वरूपाप्रतीतिप्रयुक्तेति विशेषणम्। यत्र सत्वं नास्ति तस्य संशयो वा स हेतुरेव न भवति। तथाच तादृशवस्तुहेतुत्वलक्षणविरहादसिद्धम्।

सद्विविधः वादिप्रतिवाद्युभयासिद्धोऽन्यसिद्धश्चेति। तत्राद्योयथा शब्दोऽनित्यश्चाक्षुषत्वादिति, अत्र शब्दस्य चाक्षुषत्वं नोभयस्य सिद्धम्। पूर्वपक्षं विदधानो वादी, उत्तरपक्षमवलम्बमानः प्रतिवादी, प्रथमभेदस्य दृष्टान्तः तत्राद्य इति। चक्षुषाग्राह्यश्चाक्षुषस्तस्यभावश्चाक्षुषत्वं तस्मादिति विग्रहः चक्षुर्जन्यज्ञान–विषयत्वमिति। तच्च नित्यत्ववादिनोऽनित्यत्ववादिनो वा कस्यापि शब्देन न सम्मतं इति वादिप्रतिवाद्युभयापेक्षोऽयमसिद्धम्। तत्र वाद्यसिद्धो यथा शब्दः परिणामी उत्पत्तिमत्त्वादिति। अत्र शब्दस्योत्पत्तिमत्त्वं वादिनस्सांख्यस्यासिद्धम्।" तन्मते असत उत्पत्यभावात्सतश्च विनाशाभावादुत्पादविनाशयोराविर्भाव–तिरोभावरूपेण प्रागभावप्रतियोगिमत्वरूपमुत्पत्तिमत्वमसिद्धमिति।

प्रतिवाद्यसिद्धो यथा वृक्षाः अचेतनाः मरणरहितत्वात्। हेतुरयं वृक्षे जैनस्यप्रतिवादिनो असिद्धः। प्राणवियोगरूपमरणस्य स्वीकारात्। द्वितीयः।

अन्यतरासिद्धरूप:। अस्य वादिप्रतिवाद्यन्यतरापेक्षात्वेनादौ प्रतिवाद्यासिद्धमुक्तम्। प्रतिवाद्यसिद्ध इति, इदं वादिनो बौद्धस्यानुमानम्, मरणरहितत्वादिति विज्ञानेन्द्रियायुर्निरोधो मरणम्, संगमयति हेतुरयमिति, द्रुमेष्वप्यागमे विज्ञानेन्द्रियायुषां प्रमाणतरस्थापितत्वादिति।

''साध्यधर्मविपरीतव्याप्तिकोहेतुर्विरूद्ध:''। यथा शब्दो नित्य· कार्यत्वादिति, अत्र कार्यत्वमनित्यत्वं व्याप्यम्। केनचित् पुरूषेण साध्यधर्मविपरीतस्यैव व्याप्यो हेतुर्भ्रान्त्या साध्यव्याप्यत्वेनोपन्यस्यते तदा स साध्यधर्मविपरीतव्याप्तिकत्वात् विरूद्ध:।

अयं पक्षविपक्षव्यापको हेतु:।

अत्र परैरष्टविधा विरूद्धभेदा उच्यन्ते।

यथा पक्षविपक्षव्यापक: सपक्षावृत्ति:, पक्षव्यापको विपक्षैकदेशवृत्तिस्सपक्षावृत्तिश्च, पक्षविपक्षैकदेशवृत्तिस्सपक्षावृत्तिश्च, पक्षैकदेशवृत्तिस्सपक्षावृत्ति: विपक्षव्यापकश्च, पक्षविपक्षव्यापको अविद्यमानसपक्षश्च, पक्षविपक्षैकदेशवृत्तिरविद्यमान सपक्षश्च, पक्षव्यापको विपक्षैकदेशवृत्तिरविद्यमानसपक्षश्च, पक्षैकदेशवृत्तिर्विपक्षव्यापकोऽविद्यमान सपक्षश्चेति। आद्यास्चत्वार: सत्ति सपक्षेपरे चत्वारश्चासति सपक्षेबोधास्तत्र प्रथमो यथा शब्दो नित्य: कार्यत्वात् इति कार्यत्वं हि शब्दमात्रेऽनित्यघटादिमात्रे वर्तते न तु नित्य आकाशादौ। द्वितीयो यथा नित्य: शब्द: सामान्यत्वेसति अस्मदादिबाह्येन्द्रियग्राह्यत्वात्, अत्रायं हेतु: शब्दमात्रे सामान्यत्वेसति अस्मदादि बाह्येन्द्रियग्राह्यत्वात्, अत्रायं हेतु: शब्दमात्रे क्वचिदनित्ये घटादौ वर्तते क्वचिच्चानित्ये सुखादौ नित्य आकाशादौ न वर्तत इति। तृतीयोयथा– वाङ्मनसे अस्मदादि बाह्यकरणप्रत्यक्षेसामान्यविशेषवत्वे सति नित्यत्वादयं हेतु: पक्षैकदेशे मनसि वर्तते न तु वाचि विपक्षैकदेशे गगनादावस्ति न तु सुखपादौ, नास्ति पुनर्घटादौ सपक्षे। चतुर्थो यथा– नित्या पृथिवी कृतकत्वादिति हेतु:। इदं कृतकत्वमनित्यपृथिव्यामस्ति परमाणौ च नास्ति, नित्यमात्रे नास्ति, अनित्यमात्रे

चास्ति। पंचमो यथा— आकाशस्य विशेषगुणः शब्दः प्रमेयत्वादिति अयं हेतुः शब्दमात्रे आकाशविशेषगुणशब्दमात्रे च वर्तते सपक्षश्चात्र नास्ति।

षष्ठो यथा— आकाशविशेषगुणः शब्दः प्रयत्नानन्तरीयकत्वादिति, अयंच हेतुः शब्दविशेषे वर्तते नास्ति च शब्द विशेषे, घटादावस्ति मेघादौ नास्ति च, अत्रापि सपक्षः नास्तिं। सप्तमो यथा— आकाशविशेषगुणः शब्दः बाह्येन्द्रियग्राह्यत्वात् इति, हेतुरयं शब्द मात्रे विपक्षैकदेशे रूपादौ वर्तते, न तु सुखादौ विपक्षे सपक्षस्तु नास्त्येव। अष्टमो यथा— आकाशविशेषगुणः शब्दोऽपदात्मकत्वात् इति, अत्र हेतुः ध्वनौ वर्तते न तु पदात्मकशब्दे, रूपादौ विपक्षमात्रे वर्तते सपक्षस्तु नास्त्येव। सर्व एवैते हेतवो प्रोक्तविरूद्ध एवान्तर्भावः। पक्षैकदेशवृत्तिषु असिद्धत अपि इति।

''सन्दिग्ध व्यांप्तिकोहेतुरनैकान्तिकः। स द्विविधः सन्दिग्धविपक्षवृत्तिको निर्णीतविपक्षवृत्तिकश्चेति। अर्थात् यस्य हेतोः व्याप्तिः सन्दिह्यते स हेतुरनैकान्तिकः। अयं हि सांध्येन विनाहेतोः भावस्यसंशये निर्णये वा भवति इत्याशयेन तस्य द्वैविध्यम्।

आद्यो यथा विवादापन्नः पुरूषो न सर्वज्ञो वक्तृत्वादिति। अत्र सपक्षे सर्वज्ञे वक्तृत्वं संदिग्धं सर्वज्ञः किं वक्ता न वेति संशयात्, न च वक्तुः सर्वज्ञस्य केनाप्यदर्शनान्न वक्ता स इति निश्चीयत एवेति वाच्यम्, अल्पज्ञैरस्माभिः तस्य तस्य भाषमाणस्यादर्शनेपि वक्तेति निश्चेतुमशक्यत्वेन सन्दिग्धत्वात्। ननु सर्वज्ञस्य वचनं विरूद्धं तस्य रागस्वभावविपक्षाजन्यत्वेन प्रक्षीणमोहे तस्मिन् मोहापरपर्यायरूपतदिच्छाया असंभवात्। तथा च वचनाभाव एव निश्चित इति चेन्न। सुषुप्त्यादौ वागव्यवहारादिहेतुरिच्छास्ति। न चैषा वागादिप्रवृत्तिरिच्छापूर्विका, वागादिप्रवृत्तित्वात् प्रसिद्धेच्छापूर्वक वागादिप्रवृत्तिवदित्यनुमानेन तत्रापि सानुमेयैवेति वाच्यम् हेतोरप्रयोजकत्वात् यादृशस्य हि जाग्रतोऽन्यमनांसो वा तत्रवृत्तिरिच्छापूर्विका दृष्या तत्रवृत्तिविशेषेण देशान्तरे कालान्तरे च तादृशस्यैव तत्रवृत्ताविच्छापूर्वकत्वं साधयितुं शक्यते, न पुनरन्यादृशि।

द्वितीयो यथा– पर्वतो वह्निमान् प्रमेयत्वात् इति अत्र विपक्षे ह्रदादौ प्रमेयत्वं निर्णीतम् इति। अत्र सपक्षे महानसादौ विपक्षे ह्रदादौ प्रमेयत्वस्य दर्शनात् किं प्रमेयत्वं वह्निनाव्याप्तमुतवा वह्नयभावेन इति व्याप्तेः संदिह्यमानतया अनैकान्तिकत्वम्। व्याप्यत्वासिद्धो नाम सोपाधिको हेतुरपि संदिग्धविपक्षवृत्तिक एव तथाहि साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधिः, यथा स श्यामो मित्रातनयत्वात् परिदृश्यमानतत्तनयवदिति अत्र शाकाद्याहारपरिणतिपूर्वकत्वमुपाधिः सत्यपि मित्रातनयत्वे यः शाकाद्याहारपरिणति– पूर्वकत्वमुपाधिः।

वस्तुतः त्रयहेत्वाभासातिरिक्तः सत्प्रतिपक्षबाधितभेदेन हेत्वाभासानां पंचविधत्वादेतन्मतं न साधु। अन्यद् बौद्धहेत्वाभासनिरूपणान्ते प्रतिपादितम्।



# न्यायाभिमतहेत्वाभाससामान्यस्वरूपविमर्शः

सद्धेतुनिरूपणानन्तरमसद्धेतोः स्मरणात् तन्निरूपणे स्मृतस्योपेक्षाऽनर्हत्वरूपा प्रसङ्गसङ्गतिः दर्शिता, स्वनिष्ठव्याप्तिपक्षधर्मता विरहवत्वसम्बन्धेन दुष्टहेतोः समरणमेकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति नियमात् वादिनो विजयलक्षणैककार्यकारित्वस्वोक्तहेतोस्सद्धेतुत्वप्रतिपादनेनैव परोक्तप्रतिहेतो–र्दुष्टत्वप्रतिपादनेनापि कथायां वादिनो विजयात्, अनुमितिरूपतत्व–निर्णयात्मकैककार्यकारित्वं च सङ्गतिरपि।

''सप्रसङ्गः उपोद्घातो हेतुतावसरस्तथा।
निर्वाहकैककार्यैक्ये षोढा सङ्गतिरिष्यते।।

इति प्रसिद्धवचनात् कस्यापि विषयस्य निरूपणात् प्राक्कान् सङ्गतिमाश्रित्य प्रवृत्तिरिति जिज्ञासान्यथा असम्बद्धप्रलपितत्वेन प्रेक्षावद्भिः उन्मत्तवदुपेक्षितत्वं भवेत्, अतः हेत्वाभासनिरूपणे सङ्गतिरावश्यकी इति सङ्गति–स्वरूपं विविच्यते।

प्रसङ्गस्मृतिविषयतावच्छेदकद्वेषविषयतानवच्छेदकधर्मः स च प्रकृते हेत्वाभासपदार्थत्वस्वरूपः तथा च यदि 'हेत्वाभासपदार्थाः के'' इत्याकारिका शिष्यजिज्ञासा, तदा अनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयीभूतायां हेत्वाभासपदार्थत्वरूपप्रसङ्गसङ्गतौ, सङ्गतिसामान्यलक्षणसमन्वयसम्भवेऽपि सद्धेतुप्रयोज्यकार्यप्रयोजकत्वरुपैककार्यकारित्वसङ्गतौ तादृशलक्षणाऽसत्वं स्यात्, एतादृशजिज्ञासाजनकज्ञानविषयतायाः तत्राऽसत्वात्।

यदि च सद्धेतुप्रयोज्यकार्यप्रयोजकं किमित्याकारिका शिष्यजिज्ञासा तदैककार्यकारित्वे संगतिसामान्यलक्षणसमन्वयसम्भवेऽपि पूर्वोक्तप्रसङ्गसङ्गतौ पूर्वप्रदर्शितं न संगतम्, हेत्वाभासपदार्थत्वे सद्धेतुप्रयोज्यकार्यप्रयोजकत्वजिज्ञासा–जनकज्ञानविषयतायाः विरहात्।

शिष्याणामनेकत्वात् कस्यचित् 'हेत्वाभासपदार्थाः के'' इत्याकारिका

जिज्ञासा, कस्यचिच्च "सद्धेतुप्रयोज्यकार्यप्रयोजकं किमित्याकारिकाजिज्ञासा सम्भवति इति तत्तत् जिज्ञासामादायैव तत्र तत्र सङ्गतिसामान्यलक्षणसमन्वयः निराबाध इति वदन्ति।

वस्तुतस्तु अनन्तराभिधानप्रयोजकजिज्ञासाजनकस्मरणप्रयोजकं निरूप्य निष्ठसम्बन्धस्यैव सङ्गतित्वेन "हेत्वाभासाः के" इत्याकारकैकविध जिज्ञासामादायैवोभयत्र संगतिलक्षणसमन्वयो भवत्येव। स्वविरोधिव्याप्तिपक्षधर्मत्वा–भाववत्वसम्बन्धज्ञानात् सद्धेतुप्रयोज्यकार्यप्रयोजकत्वरूपसम्बन्धज्ञानाच्च दुष्टहेतोः स्मरणोदयसम्भवेन तादृशस्मरणप्रयोजकतत्तत्सम्बन्धस्य दुष्टहेतुनिष्ठतया तस्य सङ्गतित्वस्यावश्यकत्वात् एतन्मते उपोद्घातादिपञ्चकभिन्नसङ्गतेरेव प्रसङ्गसङ्गतित्वम्।

तत्वनिर्णयः प्रमाविषयीभूता या कोटिः सा प्रमितिकोटिः तादृशकोटिनिश्चयः।

व्याप्तिपक्षधर्मता विशिष्टसद्धेतुज्ञानमिव साध्याभावसाधकहेत्वाभासत्व–ज्ञानमप्युपयुज्यते।

साध्याऽप्रतिबन्धकीभूतः साध्याभावकोटिव्याप्यवत्ताज्ञानेऽप्रामाण्य–ग्राहकत्वादिति सदसद्धेतोः तत्वनिर्णयप्रयोजकत्वम्। अथवा तत्वनिर्णयपदस्य साध्यवत् पक्षविषयता निरूपित साध्यविषयता शालिनिश्चयार्थकतया सद्धेतु–दुष्टहेतोश्च तत्वनिर्णयप्रयोजकत्वं तथाहि पर्वतो वह्निमान् धूमात् पर्वतो वह्न्यभाववान् जलादित्यादिरीत्या वादिप्रतिवादिनोः विवादे यत्र वह्न्यभावव्याप्य जलवान् पर्वत इति परामर्शः तत्सन्निकर्षवशात् पर्वतनिरूपित वृत्तित्वाभाववत् जलमित्याकारकसिद्धिज्ञानेन जले पर्वत निरूपित वृत्तित्वाभाववत् जलमित्याकारक–सिद्धिज्ञानेन जले पर्वतनिरूपित वृत्तित्वाभावज्ञाने जाते सति जलाभाववति पर्वते जलं परामृशामीत्याकारकानुव्यवसायेन जलाभाववद् विशेष्यकत्वे सति जलप्रकारत्वरूपमप्रामाण्यग्राहकत्वम्।

तथा चाप्रामाण्यज्ञानाभावविशिष्टविरोधिपरामर्शस्यैव प्रतिबन्धकतया तत्र प्रतिबन्धकाभावरूपकारणसम्पादनेन दोषस्योपयोगित्वम्। इत्थञ्च पर्वतो वह्निमान् इत्याद्यनुमितौ वह्निव्याप्य धूमवान् पर्वत इत्यादि परामर्शस्य हेतुता, परामर्शे च व्याप्तिपक्षधर्मता विशिष्टहेतुविषयकत्वेन मानसप्रमात्वज्ञानं कारणम् ततो वह्निमता ज्ञानं प्रमा, स्वविषयसाध्यनिरूपितव्याप्तिपक्षधर्मता विशिष्टहेतुज्ञान–जन्यत्वादित्यादिरीत्या सद्धेतुज्ञानस्य प्रमात्वानुमितानुपयोगः। एवं वह्न्यभावव्याप्य जलवान् पर्वत इदं ज्ञानमप्रमा स्वविषयसाध्यव्याप्तिपक्षधर्मत्वाभावविशिष्टहेतु–विषयकत्वे सति स्वीयसाध्यविषयता निरूपित व्याप्तिविषयत्वादिनिरूपित प्रकृतहेतु विषयकत्वादिरीत्याऽप्रामाण्यग्राहकत्वमित्युभयो तत्वनिर्णयप्रयोजकत्वम् तर्करत्नमहोदयास्तु इयमनुमितिः प्रमा स्वविषयीभूतसाध्यव्याप्तिपक्षधर्मताविशिष्ट–हेतुज्ञानजन्यत्वात् इदं ज्ञानमप्रमा स्वविषयीभूतसाध्यव्याप्तिपक्ष–धर्मत्वाभावविशिष्टःप्रकृते हेतुविषयकत्वे सति स्वीयसाध्यविषयता निरूपित व्याप्तिविषयत्वादिनिरूपित प्रकृतहेतुविषयकत्वात्। प्रमिति कोटिकनिश्चयकल्पे च इदं ज्ञानमप्रमास्वविरोध्यनुमितिजनकहेत्वदुष्टत्वकालीनत्वादित्यादिरीत्या उपयोगिनोऽप्रामाण्यग्रहे विपरीतहेत्वदुष्टत्वग्रहस्य प्रतिबन्धकोदुष्टत्वग्रह इति तस्य प्रामाण्यग्रहे परम्परया प्रयोजकतया सद्धेतुदुष्टहेतूभयोस्तत्वनिर्णयप्रयोजकत्वम् इति प्राहुः।

विजयस्यापि प्रयोजकाः हेत्वाभासाः यथा– मम हेतुः सन् समीचीनः व्याप्तिपक्षधर्मता विशिष्टत्वात्, तव हेतुर्दुष्टः बाधितत्वात् व्यभिचारितत्वादित्यादिरीत्या हेत्वाभासज्ञानात् परकीयहेतौ दोषाभिधानद्वारा हेत्वाभासज्ञाननिष्ठजनकतावच्छेदकविधया विजयप्रयोजकता हेत्वाभासे वरीवर्ति। सद्धेतौ च व्याप्तिपक्षधर्मताविशिष्टसद्धेतु ज्ञानाधीनपञ्चावयवघटितसन्यासप्रयोगद्वारा सद्धेतुज्ञाननिष्ठाया विजयकारणता तदवच्छेदकतयैव विजयप्रयोजकत्वम्।

षष्ठीतत्पुरुषं च समासत्वे सति नामविशिष्टनामत्वम् वैशिष्ट्यञ्च "स्वप्रयोज्यऽभेदसम्बन्धावच्छिन्न स्वार्थविशिष्टषष्ठ्यर्थावच्छिन्न प्रकारतानिरूपित

विशेष्यता प्रयोजकत्वम् स्वाव्यवहितोत्तरत्वं स्वाव्यवहितपूर्वत्वाऽन्यतरं एतदुभय सम्बन्धेन यथा राजपुरूष इत्यत्र राजपदप्रयोज्य अभेदसम्बन्धावच्छिन्न स्वार्थविशिष्ट अर्थात् राजपदार्थविशिष्टषष्ठ्यर्थावच्छिन्नस्वत्वनिष्ठप्रकारतानिरूपित पुरूषनिष्ठविशेष्यता प्रयोजकत्वं पुरूषपदे एव अत्र वैशिष्ट्यञ्च स्वाव्यवहितोत्तरत्व स्वाव्यवहितपूर्वत्वाऽन्यतर सम्बन्धेन। भूतपदोपादानेन अनुमितिकारणीभूतश्चासौ अभावश्चेति कर्मधारय लाभे न क्षतिः। कर्मधारयञ्च समासत्वे सति नाम विशिष्ट नामत्वम् वैशिष्ट्यञ्च स्वप्रयोज्यमद्भेद सम्बन्धावच्छिन्न किञ्चिद् विशिष्ट सुबर्थानवच्छिन्नप्रकारता निरूपित विशेष्यता प्रयोजकत्वं स्वाव्यवहितोत्तरत्वादिसम्बन्धेन।

अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वम् चिन्तामणिकारेण प्रथमहेत्वाभाससामान्यलक्षणमुक्तम् अत्रेयं चिन्तनीयं यत् अनुमितिप्रतिबन्धकयथार्थ ज्ञानविषयत्वमिति लघुलक्षणस्य सम्भवात् गुरूलक्षणभूतस्य कारणीभूताभाव प्रतियोगित्वघटितस्य निवेशो व्यर्थः।

भवतु नाम यदि प्रतिबन्धकत्वघटिलक्षणं प्रकृते अङ्गीक्रियते तदा का आपत्तिः यद्भिया पूर्वोक्तलक्षणे प्रतिबन्धकत्वघटितलघुत्वात् तन्न। प्रतिबन्धकत्वं हि द्विविधम्, कारणीभूताभावप्रतियोगित्वमपरञ्च प्रयोजकीभूताभाव प्रतियोगित्वरूपं वा। अत्र लक्षणे कारणीभूताभावप्रतियोगित्वरूपमेव प्रतिबन्धकत्वमपेक्षितम् अतिप्रसक्तदोषनिराकरणत्वात्। तथाहि वह्निव्याप्यधूमवान् ह्रदः इदं ज्ञानमप्रमा इत्याकारकाप्रामाण्यज्ञानास्कन्दितपरामर्शकाले ह्रदो वह्निमान् इत्याकारकानुमित्यनुत्पत्या, तादृशपरामर्शधर्मिकऽप्रामाण्यनिश्चयाभावस्यापि ह्रदो वह्निमान् इत्यनुमितौ प्रयोजकत्वात्, तत्प्रतियोगियथार्थज्ञानविषयत्वस्य परामर्शविषयवह्निव्याप्य धूमवद् ह्रदे सत्वादतिप्रसङ्गः।

माभूततन्निवेशः परन्तु अनुमितिकारणाभावप्रतियोगियथार्थज्ञान–विषयत्वमिति कथने न काप्यनुपपत्तिः किं भूतपदेन। परं एतद् न समीचीनम् यतः अनुमितिकारणस्याभाव इति षष्ठीतत्पुरूषसमाससम्भवति स्यात् तन्निरासाय

भूतपदोपादानम्।

भूतपदोपादानेन अनुमितिकारणीभूतश्चासौ अभावश्चेति कर्मधारय लाभेन न क्षतिः। ननु तथापि अनुमितिकारणीभूतो यस्तत्प्रतियोगियथार्थज्ञान–विषयत्वमित्यादिनिवेशस्यैव सम्यक्त्वे अभावपदोपादानमनर्थकम् इतिचेन्न पर्वतो वह्निमान् इत्यत्र स्वावच्छिन्नभिन्नभेदस्य स्वस्वरूपतया परामर्शावच्छिन्नभिन्नभेदस्य परामर्शरूपतया पर्वतोवह्निमानित्यनुमितिकारणीभूतो यः परामर्शः तत्प्रतियोगियत् स्वावच्छिन्नभिनं "घटवद्भूतलमिति ज्ञानम् तद् विषयत्वस्य घटवद् भूतले सत्वात् अतिव्याप्तिः। एवञ्च अयमात्मा आत्मत्वप्रकारकज्ञानप्रतियोगिक समवायादित्यादौ आत्मत्वेऽपि अतिव्याप्त्यापत्तेः।

ज्ञायमानलिङ्गस्य कारणत्वेनोक्तहेतोः कारणत्वात् हेत्वन्तर्गततत्प्रतियोगि–ज्ञानविषयस्यात्मत्वे सत्वात्।

अभावपदस्य भावप्रधाननिर्देशतया अनुमतिनिष्ठकार्यतानिरूपित कारणतावच्छेदकं यदभावत्वरूपानुयोगित्वं तन्निरूपित प्रतियोगिताश्रययथार्थज्ञानविवक्षणीयत्वात्। तथाच परामर्शस्य परामर्शावच्छिन्न–भिन्नभेदत्वेन परामर्शाभावाभावत्वेन वा न कारणत्वम्, अपितु परामर्शत्वेनैव, परामर्शत्वं तु नानुयोगितारूपमिति अनुमितिकारणतावच्छेदकीभूतानुयोगिता विरहात् घटवद् भूतलमित्युदासीनमादाय नातिव्याप्तिः।

ननु अनुमतिनिष्ठकार्यतानिरूपितकारणतावच्छेदकं यदभावत्वरूपानुयोगित्वं तन्निरूपितप्रतियोगिताश्रययथार्थविषयत्वमित्यपि समीचीनं तर्हि ज्ञानपदं किमर्थमिति चेन्न। पर्वतो वह्निमान् धूमादित्यादौ अनुमितिकारणीभूताभावप्रतियोगि कामिनी जिज्ञासा विषयत्वमादाय कामिनीज्ञानेऽतिव्याप्तिः। कामिनीज्ञानान्यज्ञानत्वावच्छिन्नं प्रति कामिनी जिज्ञासायाः प्रतिबन्धकतया तदभावस्य कार्यमात्रं प्रति कारणत्वात्।

न च पर्वतो वह्निमान् कामिनी चेत्याकारकसमूहालम्बानानुमितौ कामिनी जिज्ञासाप्रतिबध्यत्वविरहान्नकामिनी ज्ञानेऽतिव्याप्तिः इति वाच्यम्। यादृशस्थलविशेषे

तादृश समूहालम्बनानुमितिः कस्यापि न जाता तादृश स्थले कामिनीजिज्ञासा विषये अतिव्याप्तिवारणाय ज्ञानपदोपादानस्य सार्थक्यम्।

अत्रेदं आक्षिप्यते यत् पर्वतो वह्निमानित्यत्र अनुमिति कारणभूतोयः सिषाधयिषाविरहविशिष्टसिद्ध्यभावः तत्प्रतियोगियथार्थज्ञानविषयत्वस्य वह्निमत्पर्वते सत्वात् अतिव्याप्त्यापत्तेः इति वक्तुमशक्यम्।

अभावपदस्य सिषाधयिषाविरहविशिष्टसिद्ध्यभावातिरिक्ताभावपरत्वात् इति केचित्।

वस्तुतस्तु वह्निविधेयक अनुमितावेवासिद्धे प्रतिबन्धकत्वे पर्वतत्वावच्छिन्नविशेष्यतानिरूपित वह्नित्वावच्छिन्नप्रकारताशाल्यनुमितित्वस्य वह्निमत् पर्वतो घटवानित्यनुमितावपि सत्वेन तत्र पर्वतो वह्निमान् इत्याकारक सिद्धिप्रतिबन्धकता विरहेण अनुमितित्वव्यापकप्रतिबध्यता निरूपित प्रतिबन्धकतायाः सिद्धावसत्वात् नातिव्याप्त्यापत्तिः।

इदमत्रचिन्तनीयं यत् पूर्वोक्तविवेचनेन चिन्तामणि प्रोक्तलक्षणत्रय–दोषविशिष्टहेतुनामेवलक्षणं किन्तु लक्ष्यभिन्नबाधादिदोषेषु लक्षणागमनादतिव्याप्तिः दोषः स्यादेव। तथा च ह्रदो वह्निमान् धूमादित्यादौ धूमरूपहेतोरेव लक्ष्यतया ह्रदो वह्न्यभाववान् धूमश्च इत्याकारकसमूहालम्बनात्मक बाधनिश्चयाभावः तत्प्रतियोगि यत् यथार्थज्ञानं तच्च ह्रदो वह्न्यभाववान् धूमश्चेत्याकारकं ज्ञानं तद् विषयत्वं धूमे सत्वेन लक्षणसमन्वयसम्भवेऽपि लक्ष्यभिन्ने वह्न्यभाववद्घटादि–रूपबाधादिदोषेष्वतिव्याप्तिः। ह्रदो वह्निमानित्यनुमितिकारणीभूतो यः ह्रदो वह्न्यभाववान् इत्याकारकबोधनिश्चयाभावः तत्प्रतियोगिवह्न्यभाववान् ह्रद इत्याकारक यथार्थज्ञानविषयतायाः दोषादौ सत्वात्।

एवमुक्तप्रथमलक्षणे ह्रदो वह्निमान् जलादित्यादौ घटादि रूपोदासीनेऽतिव्याप्तिस्तत्रापि ह्रदो वह्निमानित्यनुमितिकारणीभूताभावः ह्रदो वह्न्यभाववान् घटश्चेत्याकारकसमूहालम्बनात्मकबाधनिश्चयाभावः तत्प्रतियोगि

यत् ह्रदो वह्न्यभाववान् घटश्चेत्याकारकं समूहालम्बनात्मकं ज्ञानं तद्विषयत्वस्य उक्तोदासीने घटेऽपि सत्वात्। तद्वारणाय यदि यथार्थज्ञाननिष्ठा या प्रकृतानुमिति प्रतिबन्धकता तन्निरूपितावच्छेकतावद् विषयताश्रयत्व रूपलक्षणार्थो विधीयते तदा ह्रदो वह्निमान् इत्यनुमितिनिष्ठ प्रतिबध्यता निरूपित प्रतिबन्धकतायाः ह्रदो वह्न्यभाववान् घटश्चेत्याकारकबाधज्ञाने सत्वेऽपि न घटादिविषयता–प्रतिबन्धकतावच्छेदिका अतो न घटादौ अतिप्रसङ्गः।

अत्रेदं विचार्यते यत् ह्रदो वह्निमान् धूमादित्यत्र ह्रदो वह्न्यभाववान् धूमश्चेत्याकारकसमूहालम्बनज्ञाननिष्ठा या ह्रदो वह्निमान् इत्याकारकानुमिति–प्रतिबन्धकतातदवच्छेदकीभूताया विषयता सा च वह्नित्वाभावाभावत्ववद्ह्रदत्वादिनिष्ठैव विषयता न तु धूमादिरूपहेतुविषयतेति तादृशविषयताश्रयत्वं धूमेऽभावेन बाधितहेतौ अतिव्याप्तिर्दुर्वारैव।

जलं वह्निमत् जलादित्यादौ पक्षाद्यभिन्नहेतुकस्थलीयबाधितजलादिहेतौ वह्न्यभाववज्जलमित्याकारकनिश्चयनिष्ठप्रकृतानुमितिप्रतिबन्धकतावच्छेकत्वस्य जलविषयतायां सत्वेन पक्षभिन्नजलरूपहेतुविषयतायामपि तत्सत्त्वतया दुष्टहेतौ लक्षणसमन्वयसम्भवः।

तथा च यत्र यत्र बाधसत्प्रतिपक्षादिज्ञाननिष्ठानुमितिप्रतिबन्धकतावच्छेदिका हेतु विषयता न भवति तत्र सर्वत्र बाधसत्प्रतिपक्षादावव्याप्ति। इत्थञ्च दोषेष्वतिव्याप्तिः दुष्टहेतावव्याप्तिरूपदोषोभयान्न प्रथमलक्षणं दुष्टहेतोः वा लक्षणत्रयं न दुष्टहेतोः। अपितु दोषाणामेव लक्षणम् तद्वत्त्वम् दुष्टत्वम्। स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्व सम्बन्धेन। परन्तु मूलोक्तलक्षणस्य दोषलक्षणपरत्वे हेतुवदाभासन्त इति व्युत्पत्तया हेत्वाभासपदस्य दुष्टहेतुपरत्वेन दुष्टहेतोरेव प्रस्तुततया तन्निरूपणस्यैव प्रतिज्ञा विषयत्वेन आकांक्षितया दुष्टहेतुनिरूपणकरणे न्यूनतास्यान्मूलकारस्यातो दुष्टहेतोरेव लक्षणम् वाच्यं, तथा च पूर्वोक्तदोषः दुर्वारः।

अत्रेदमाशङ्कते यत् हेतोराभासाः हेत्वाभासाः इति व्युत्पत्त्या हेत्वाभासपदेन हेतुदोषस्यैव लाभसम्भवेन तावतैव हेतुदोषलक्षणस्यापि प्रस्तुतया दोषलक्षण–

करणेनैव पूर्वोक्तदोषवारणसम्भवात् तन्न, तथा सति दोषलक्षणस्यैव प्रस्तुतत्वात् 'ते चे' त्यादिना तद् विभाग तन्निरूपणमेवोचितम्, न तु दुष्टहेतोः, ते चेत्यादिना च दुष्टहेतुनां विभागकरणात् तच्चविभजनं दुष्टहेतुनिरूपणस्याऽप्रतिज्ञातत्वेऽसङ्गतमेव स्यात्। यदि च ते चेत्यादि मूलघटकसव्यभिचारविरोधादिपदस्य भावप्रधाननिर्देशेन दोषविभाजकत्वपरता स्वीक्रियते तथापि दोषनिरूपणस्यैव प्रतिज्ञातत्वेन प्रस्तुततया तस्य प्रतिज्ञातस्यैव निरूपणम् तस्यैव च विभाग इति नियमेन दुष्टहेतुनां विभागस्यावश्यकताविरहप्रयुक्तदुष्टहेतुनां संकरणे ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभाववद्ह्रदरूपबाधः पक्षः धूमाभाववद्ह्रदरूप स्वरूपासिद्धिरूपदोषवद् हेतावसिद्धरूपदोषवत्वं, एवमसिद्धरूप वह्न्भावव्याप्यवद् ह्रदरूपसत्प्रतिपक्षः, एवञ्चबाधरूपदोषाभाववत्यसिद्धिरूप दोषाभाववतिबाधितहेतौ बाधरूपदोषवत्वम्, प्रकृते च धूमरूपहेतावुभयविधदोषवत्वमिति परस्परात्यन्ताभावसमानाधिकरणत्वे सत्येकाधिकरणवृत्तित्वरूपसाङ्कर्यभयेन बाधरूपासिद्धरूपदोषस्यैकहेतौसत्वे बाधितत्वादिनाविभागस्य मिथो व्यावर्तक धर्मविरहप्रयुक्तव्याघात् प्रसङ्गशङ्कायाः अनुदयेनैतादृश शङ्कासमाधानपरस्योपधेयसङ्करेऽपीत्यादिग्रन्थस्योपाध्यसङ्करेण विभागपरत्वोपवर्णनमसङ्गतमेवस्यात्, अतः दुष्टहेतुलक्षणमेव मूलकारस्येति मन्तव्यम्, नातः सांकर्यसम्भावना न वा विघातव्याघातशंकायाः अनवतारः।

तथा च अविभागव्याघातशंकायाः प्रार्दुभावेसतित्येवोपधेय-सङ्करेऽपीत्यादिग्रन्थस्य सामञ्जस्य सम्भावना तदर्थमपि दुष्टहेतुलक्षणमेव चिन्तामणि- कारस्येति स्वीकरणीयम्। तथा च पूर्वोक्तापत्यनुपपत्तितदवस्थैवेति चेन्नैतत्सारं प्रथमं दोषलक्षणे कृते पूर्वोक्तलक्षणे स्वज्ञानविषयप्रकृतहेतुतावच्छेकवत्वरूपसम्बन्धेन दोषवत्वस्य हेतौ सत्वेन दुष्टहेतुनिरूपणीयमस्यापि प्रस्तुततया न पूर्वोक्तदोषः अर्थात् विभागव्याघातशङ्काकलङ्कापनोदकोपधेयसङ्करेपीत्यादि ग्रन्थस्या- सङ्गतिसम्भावना।

अनुमिति-कारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वरूपलक्षणघटकानुमिति पदं यद्यनुमितिसामान्यपरं स्यात् तदा सामान्यपदस्य व्यापकतावाचितया

अनुमितित्वव्यापकप्रतिबध्यता निरूपिता या यथार्थज्ञाननिष्ठा प्रतिबन्धकता तदवच्छेदकविषयताश्रयत्वम्, अनुमितित्वव्यापककार्यता निरूपित–कारणताश्रयीभूतोऽभावस्तत्प्रतियोगियथार्थज्ञानविषयत्वं वा हेत्वाभासत्वमित्यस्यैव पर्यवसितलक्षणत्वेऽसम्भवापत्तिः। तथाहि ह्रदो वह्निमान्जलादित्यादौ वह्न्यभाववद्ह्रदादिरूपबाधादिज्ञानीयप्रतिबन्धकतानिरूपिता या प्रतिबध्यता सा च संयोगसम्बन्धावच्छिन्नप्रकारता निरूपितह्रदत्वावच्छिन्नविशेष्यताशालि बुद्धित्वावच्छिन्ना प्रतिबध्यता तत्रानुमितित्वव्यापकता नास्ति, घटवद्भूतलमित्याकारकानुमितावपि अनुमितित्वं तत्र निरूक्तप्रतिबध्यताविरहात् व्यापकताभङ्ग इत्यनुमितित्वव्यापकप्रतिबध्यतत्वाऽप्रसिद्धया लक्षणागमनात् अनयैव दिशा सर्वत्रैव लक्ष्येलक्षणागमना प्रयुक्तानुमितित्वव्यापकप्रतिबध्यताघटितलक्षणन्न युक्तम्। यद्यनुमितिपदं यत्किञ्चिदनुमिति परं तदा यत्किञ्चिदनुमिति व्यक्तिनिष्ठप्रतिबध्यता निरूपिता या यथार्थज्ञाननिष्ठा प्रतिबन्धकता तदवच्छेदकविषयताश्रयत्वस्यैव लक्षणार्थत्वेन ह्रदो वह्निमान् इत्याकारकानुमितेः यत्किञ्चिदनुमितिपदेन धर्तुंशक्यतया तादृशानुमितिनिष्ठा या संयोगसम्बन्धावच्छिन्न–वह्नित्वावच्छिन्न प्रकारकतानिरूपित ह्रदत्वावच्छिन्न विशेष्यताशालिबुद्धित्वावच्छिन्ना प्रतिबध्यता तन्निरूपिता या स्वरूपसम्बन्धावच्छिन्न वह्न्यभावत्वावच्छिन्न प्रकारता निरूपित ह्रदत्वावच्छिन्न विशेष्यताशालिनिश्चयत्वावच्छिन्ना प्रतिबन्धकता तच्छालियथार्थज्ञानविषयत्वस्य वह्न्यभाववद् ह्रदरूपबाधे सत्वेन स्वज्ञानविषयप्रकृत–हेतुत्तावच्छेदकवत्वसम्बन्धेन तद्वत्वस्य जलादिहेतौ सत्वात् लक्षणसमन्वयेऽसम्भवाभावेऽपि पर्वतो वह्निमान् धूमादित्यादौ वह्न्यभावविशिष्टह्रदस्य दोषत्वापत्तिः।

तथाहि यत् किञ्चिदनुमितिपदेन ह्रदो वह्निमान् इत्यनुमितिमादाय तादृशानुमितिनिष्ठप्रतिबध्यता निरूपिता या वह्न्यभाववान् ह्रद इत्याकारक निश्चयनिष्ठाप्रतिबन्धकता तच्छालि यथार्थज्ञानविषयत्वस्य वह्न्यभाववद् ह्रदादौ सत्वात्।

अतः अनुमितिपदं नानुमिति सामान्यपरं, न वा यत् किञ्चिदनुमितिपरम्, किन्तु प्रकृतपक्षतावच्छेदकावच्छिन्न विशेष्यक प्रकृतसाध्यता– वच्छेदकावच्छिन्नप्रकारक प्रकृतहेतुतावच्छेदकावच्छिन्न हेतुकानुमितिपरमेव वाच्यम्, तथा एतादृशानुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वस्यैव लक्षणार्थतया पर्वतो वह्निमान् धूमात् इत्यादौ पर्वतत्वावच्छिन्न विशेष्यक वह्नित्वावच्छिन्नप्रकारक धूमत्वावच्छिन्नहेतुकानुमिति निष्ठप्रतिबन्धकतायाः वह्न्यभावविशिष्ट– ह्रदविषयकनिश्चये विरहेण न तत्र वह्न्यभावविशिष्टह्रदेऽतिव्याप्तिः। ह्रदो वह्निमान् जलादित्यत्र ह्रदत्वावच्छिन्न विशेष्यक वह्नित्वावच्छिन्नप्रकारकह्रदो वह्निमानित्यनुमितौ वह्न्यभावविशिष्टह्रदादिविषयकबाधनिश्चयस्य प्रतिबन्धकतया तादृशप्रतिबन्धकतामादाय तत्रत्यबाधे लक्षणगमनान्नासम्भवः। इत्थञ्च अनुमितिपदस्य तादृशानुमितिपरत्वे नासम्भवः न वातिप्रसङ्गः।

वस्तुतस्तु ज्ञानपक्षकविषयितया वह्निसाध्यकवह्न्यभाववद् धूमाभाववत्कालीनमहानसीयवह्नीतरवह्न्यभाववज्ज्ञानकालीनधूमहेतुकस्थले, महानसीयवह्न्यभाववज्ज्ञानरूपबाधेऽव्याप्तिः, ज्ञानं वह्निमदित्याकारकानुमितेरपि प्रकृतपक्षसाध्यकानुमितितया बाधनिश्चयप्रतिबध्यत्वाभावात्, अतः प्रकृतहेतुकत्वनिवेशः तथा च वह्निमदित्यनुमितिं प्रति तादृशपरामर्शस्य धूमावच्छेदेन वह्न्यभावावगाहिनिश्चयविशिष्टतादृशधूमविषयकनिश्चयत्वेन प्रतिबन्धकत्वात्, किन्तु महानसीयवह्निप्रकारकानुमितेरेव तत्र जायते। तत्र चोक्तबाधनिश्चय– प्रतिबध्यत्वासत्वात्।

अत्रेदमाशङ्क्यते यत् विषयतासम्बन्धेन वह्नेः साध्यत्वानुसरणं व्यर्थम्। तन्न। संयोगादिसम्बन्धेन वह्नेः साध्यत्वानुसरणं व्यर्थम्। तन्न। संयोगादि सम्बन्धेन वह्नेः साध्यत्वे धूमावच्छेदेन संयोगसम्बन्धावच्छिन्न प्रतियोगिताकवह्न्यभावावगाहि निश्चयविशिष्टपक्षे तादृशधूमवत्तावगाहिपरामर्शकाले संयोगादिसम्बन्धेन वह्निसामान्यानुमितेरिव महानसीय वह्निमान् इत्याकारक वह्निविशेषानुमितेरप्यसम्भवात्, अतः विषयित्युक्तम् तथा च तादृशपरामर्शस्य

विषयितया वह्निसामान्यानुमितिं प्रत्येव प्रतिबन्धकतया महानसीय वह्निविषयकानुमिति इत्युक्तौ बाधकाभावात्

अनुमितिपदस्य तत्पक्षसाध्यहेतुकानुमितिपरत्वेऽपि पर्वतो धूमवान् वह्नेरित्यादौ धूमाभाववद्वृत्तिवह्निरूपव्यभिचारादावव्याप्तिः, व्यभिचारनिर्णयस्य व्याप्तिज्ञानं प्रत्येव विरोधितया अनुमितिजनकव्याप्तिज्ञानं प्रत्येव व्यभिचारनिश्चयाभावजनकत्वेन पर्वतो धूमवानित्याकारकानुमितिं प्रति धूमाभाववद् वृत्तिवह्निरूपव्यभिचार निर्णयस्याऽप्रतिबन्धकतया व्यभिचारनिर्णया-भावस्यानुमितिकारणीभूताभावपदेन ग्रहीतुमशक्यतया तत्प्रतियोगियथार्थज्ञान-विषयत्वस्य व्यभिचारादावभावात्।

अथ यदि अनुमितिपदं जहत्स्वार्थलक्षणया प्रकृतानुमितिजनकज्ञानपरं तदा पर्वतो धूमवान् इत्यनुमिति जनकीभूतं यत् धूमव्याप्य वह्निमान् पर्वत इत्याकारक परामर्शात्मकं ज्ञानं तत् कारणीभूतो यः धूमाभावावद् वृत्तित्वविशिष्ट वह्निरूप व्यभिचारनिश्चयस्याभावः तत्प्रतियोगित् यथार्थज्ञानं तच्चोक्तव्यभिचार-निर्णयात्मकं ज्ञानं तद् विषयत्वस्य धूमाभाववद्वृत्तित्वविशिष्टवह्निरूप व्यभिचारे सत्वात् लक्षणसमन्वयः।

इत्थं लक्षणस्य स्वरूपं कृते सत्यपि पर्वतो वह्निमान् जलादित्यादौ बाधसत्प्रतिपक्षादौ अव्याप्तिः, तत्र ह्रदो वह्निमानित्याकारकानुमितिजनकीभूतं यत् वह्निव्याप्य जलवान् ह्रद इत्याकारक परामर्शात्मकं ज्ञानं तादृशज्ञानं प्रति वह्न्यभाववद् घटरूपबाधनिश्चयस्य वह्न्यभावव्याप्यवद्ध्रद्रूपसत्प्रतिपक्षनिर्णयस्य चाप्रतिबन्धकतया अनुमितिकारणीभूताभावपदेनोक्तबाधसत्प्रतिपक्षनिश्चयाभावस्य ग्रहीतुमशक्यतया तादृशाभावप्रतियोगियथार्थज्ञानविषयत्वस्य बाधादावभावात्।

अतः अनुमितिपदं नानुमितिमात्रबोधकं न वा तत्कारणज्ञानमात्रपरम्, किन्तु प्रकृतपक्षसाध्यानुमितिनिष्ठकार्यता निरूपकसम्बन्धित्वरूपेणानुमिति-तत्कारणपरामर्शोभयलाक्षणिकमेवानुमितिपदम्। तथाचानुमितिमादायबाधादौ अनुमितिकारणपरामर्शमादाय व्यभिचारादौ लक्षणसङ्गतिर्भवत्येव।

**मिश्रास्तु—** अनुमितिनिष्ठकार्यतानिरूपकत्वं तादृशकार्यतासम्बन्धित्वं च द्वयमनुगमकम्, तत्र प्रथमे अनुमितिनिष्ठकार्यतानिरूपकग्रहनिष्ठप्रतिबध्यता—निरूपतिप्रतिबन्धकताशालियथार्थज्ञानविषयत्वं लक्षणार्थ:, तथा च ह्रदो वह्निमान् जलादित्यादौ ह्रदो वह्निमानित्याकारिका यानुमितिस्तन्निष्ठा या वह्निव्याप्यजलवान् ह्रद इत्याकारकपरामर्श निरूपिताकार्यता तादृशकार्यतानिरूपकत्वमनुमितौ परामर्शे च वर्तते इति तादृश कार्यता निरूपको ग्रह: अनुमित्यात्मक: परामर्शात्मकश्च ग्रह इति तन्निष्ठप्रतिबध्यता निरूपित प्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य वह्न्यभाववद्वृत्ति जलरूपव्यभिचारे च सत्वात् लक्षणसङ्गति: प्राहु:।

लाक्षणिकाऽऽनुमितौ घटकीभूतं सम्बन्धिपदं तत् साक्षात्कार—विषयतात्मकनिरूपकत्वपरम्। तथा च प्रकृतपक्षसाध्यहेतुकानुमितिनिष्ठ कार्यतासाक्षात्कारजनकसाक्षात्कारीय विषयताश्रयंग्रहनिष्ठप्रतिबध्यता निरूपित प्रतिबन्धकताशालियथार्थज्ञानविषयत्वमिति परिष्कृतं हेत्वाभासलक्षणम्।

अत्रेदं कल्पे इदमाशङ्क्यते यत् प्रकृतहेतुकत्वनिवेशो व्यर्थ इति चेन्न, पर्वतो वह्निमान् धूमादित्यादौ वह्न्यभाववद्वृत्ति द्रव्येऽतिव्याप्त्यापत्ते:। वह्निव्याप्य द्रव्यवान् पर्वत इति परामर्शोत्तरजायमाना या प्रकृतपक्षसाध्यकानुमिति: सा च पर्वतो वह्निमान् इत्यनुमिति: तन्निष्ठ कार्यतासाक्षात्कारजनकसाक्षात्कारीय विषयताश्रयत्वस्योक्तपरामर्शेऽपि वर्तमानतया तन्निष्ठप्रतिबध्यता निरूपित प्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य वह्न्यभाववद् वृत्तिद्रव्यरूपव्यभिचारे सत्वात्।

प्रकृत हेतुकत्वनिवेशेऽपि वह्निव्याप्य धूमवान् पर्वत: वह्निव्याप्य द्रव्यवांश्चेत्याकारकसमूहालम्बनपरामर्शोत्तरानुमिति निष्ठकार्यतासाक्षात्कार—जनकसाक्षात्कारविषयताश्रयत्वस्य द्रव्यलिंगकपरामर्शेऽपि वर्तमानतया तादृशपरामर्शमादायोक्तस्थले वह्न्यभाववद्वृत्तिद्रव्ये अतिव्याप्तिदुर्वारैवेति वक्तुमशक्यम्। प्रकृतहेतुकत्वावच्छिन्नत्वस्य कार्यतायां निवेशात्, तथा च प्रकृत हेतुतावच्छेदकावच्छिन्नप्रकारता निष्ठनिरूपकत्व सम्बन्धावच्छिन यावच्छेदकता

तन्निरूपिता याऽव्यहितोत्तरत्व सम्बन्धावच्छिन्नपरामर्शनिष्ठावच्छेदकता तन्निरूपकत्वं तदर्थः। एवञ्च धूमत्वावच्छिन्नप्रकारतानिष्ठावच्छेदकता निरूपित निश्चय-निष्ठावच्छेदकता निरूपित कार्यतासाक्षात्कारजनकसाक्षात्कारविषयः धूमलिंगकपरामर्श एव भवति न तु द्रव्यलिंगकपरामर्श इति नातिव्याप्तिः।

न च पर्वतो वह्निमान् धूमादित्यादौ काञ्चनमयत्वाभाववद् धूमेऽतिव्याप्तिः, वह्निव्याप्य काञ्चनमयधूमवान् पर्वत इति परामर्शोत्तरजायमानानुमिति-निष्ठकार्यतायां हेतुतावच्छेदकीभूतधूमत्वावच्छिन्नप्रकारतानिष्ठावच्छेदकता निरूपितत्वस्य निश्चयनिष्ठावच्छेदकता निरूपितत्वस्य च सत्वेन तादृश कार्यता साक्षात्कारजनकसाक्षात्कारनिरूपित विषयतायाः उक्त परामर्शेऽपि सत्वेन तादृश परामर्शं प्रति काञ्चनमयत्वाभाववान् धूम इति ज्ञानस्य प्रतिबन्धकत्वात्।

न च प्रकृतहेतुतावच्छेदकपर्याप्तावच्छेदकताक प्रकारता निष्ठावच्छेदकतत्वानिरूपितेत्यादिक्रमेण निवेशे नायं दोष इति वाच्यम्, सर्वत्र परामर्शघटकहेतुनिष्ठप्रकारतायां हेतुवाच्छेदकव्याप्त्युभयपर्याप्तावच्छेदकताकत्वं, न तु धूमत्वादिपर्याप्तावच्छेदकताकत्वमिति सर्वत्रासम्भवापत्तेः।

न च हेतुतावच्छेदकता भिन्ना सती व्याप्तिनिष्ठावच्छेदकता भिन्ना सतीप्रकारतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिताया प्रकारता-निष्ठावच्छेदकता तन्निरूपितनिश्चयनिष्ठावच्छेदकता निरूपितत्वस्य कार्यतायां निवेशनीयतया नोक्तदोष इति वाच्यम्, अन्वयव्याप्तिव्यतिरेकव्याप्त्यन्तरनिवेशे च साधारणानुपसंहारित्वादाव सकलविधव्याप्तिनिष्ठावच्छेदकताभेदनिवेशे च पर्वतोवह्निमान् गगनादित्यादौ वह्न्यसमानाधिकरण वह्न्यभावव्यापकी-भूताभावप्रतियोगिगगनेऽतिव्याप्तेः, गगनव्यापकवह्निसमानाधिकरण वह्न्यभाव-व्यापकीभूताभावे प्रतियोगिगगनवानिति परामर्शस्य पर्वतो वह्निमान् इत्युमितिं प्रतिकारणतया एतादृशपरामर्शोत्तरानुमिति निष्ठकार्यतायाम् अन्वय-व्यतिरेकव्याप्तिनिष्ठावच्छेदकता भिन्ना सती हेतुवाच्छेदकनिष्ठावच्छेकताभिन्ना सती प्रकारतात्वनिष्ठावच्छेकता भिन्ना यावदच्छेदकता

तादृशावच्छेदकत्वानिरूपितप्रकारतानिष्ठावच्छेदकता निरूपितनिश्चय निष्ठावच्छेदकतानिरूपितत्वस्य तत्तन्निष्ठावच्छेदकता निरूपितत्वस्य च सत्वात्, यथा च तादृशकार्यताविषयकसाक्षात्कारजनकसाक्षात्कारविषयकपरामर्शनिष्ठ–वह्निसामानाधिकरण्य प्रकारकवह्न्यभावव्यापकाभावप्रतियोगिगगनत्वावच्छिन्न गगननिष्ठविशेष्यताशालिबुद्धित्वावच्छिन्न प्रतिबध्यतानिरूपित प्रतिबन्धकताशालि यथार्थज्ञानविषयत्वस्य तादृशगगने सत्वात् इति चेन्न। प्रकृत–हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताक पर्याप्त्यनुयोगितावच्छेदकरूपवृत्ति–विशेष्यत्वच्छिन्नप्रकारता निष्ठावच्छेदकता निरूपक निश्चय–निष्ठावच्छेकतानिरूपकत्वस्य च कार्यतायां निवेशनीयत्वात्। रूपवृत्तित्वावच्छिन्न प्रतियोगिताक पर्याप्त्युनयोगितावच्छेदकत्वसम्बन्धेन, एवञ्च प्रकृतपरामर्शे हेतुनिष्ठविशेष्यतायां व्यतिरेकव्याप्तिगगनत्वोभयगतद्वित्ववृत्तित्वसत्वेऽपि गगनरूपहेतुतावच्छेदकीभूतगगनत्वगतैकत्ववृत्तित्वविरहेण तादृश परामर्शस्य धर्तुमशक्यत्वान्न पूर्वोक्तदोषः।

अत्रेदमाशङ्क्यते यत् गगनव्यापकवह्निसमानाधिकरण वह्न्यभाव व्यापकीभूताभाव प्रतियोगिगगनवान् पर्वत इति परामर्श निरूपितकार्यतायां गगनत्वं धर्मितावच्छेदकीकृत्य व्यतिरेकव्याप्तिस्तादृशपरामर्शांशे भासत इति गगनत्वावच्छिन्न विशेष्यतामादाय पूर्वोक्तदोषस्तदवस्थ तन्न तद्वारणाय तादृशविशेष्यतायां प्रकारता विशिष्टान्वये व्याप्तिप्रकारतानिरूपितत्वस्य निवेशात् वैशिष्ट्यञ्च स्वनिरूपितधर्मितावच्छेदकत्वावच्छेद्यत्वसम्बन्धेन तथा चोभयधर्मावच्छिन्न–विशेष्यतायाः रूपवृत्तित्वाभावेनातिव्याप्तिविरहात्।

एवमेकत्र द्वयमिति रीत्या उभयविधव्याप्तिप्रकारकपरामर्शमादाय व्याप्त्यभाववत् गगनेऽतिव्याप्तिवारणाय स्वावच्छिन्न किञ्चिद् प्रकारतानवच्छेदक विषयत्वनिरूपितत्वमपि प्रकारता विशिष्टान्य प्रकारता निरूपित विशेष्यतायां विशेषणं देयम्, तथा चोभयवद्गगनवानिति परामर्शे उभयप्रकारता–निरूपितैकाविशेष्यता भवतु, परामर्शस्य कारणता तु हेतुतावच्छेदका–

वच्छिन्नविशेष्यता निरूपितैकव्याप्तिनिष्ठप्रकारताशालिनिश्चयत्वेनैव एवञ्च काञ्चनमयधूमलिंगकपूर्वोक्तपरामर्शमादाय काञ्चनमयत्वाभाववद् धूमे, एकत्र द्वयमिति रीत्या उभयाभाववद् गगने, उभयव्याप्तिप्रकारकपरामर्शमादाय गगनव्यापकवह्निसमानाधिकरणवह्न्यभावव्यापकीभूताभावप्रतियोगि गगने च नातिप्रसंग:, धूमत्वगतैकत्ववृत्ति विशेष्यतात्वावच्छिन्नप्रकारतानवच्छेदकं यत् कान्चनमयत्वविषयत्वं तादृशविषयतानिरूपितत्वस्यैव विशेष्यताया सत्त्वात्।

परामर्शजन्यानुमितौ परस्परव्यभिचारवारणाय कार्यतावच्छेदककोटौ परामर्शाव्यवहितोत्तरत्वनिवेशस्य आवश्यकत्वेन प्रकृतपक्षसाध्यविषयकानुमिति–त्वस्य कार्यतावच्छेदकतायां प्रयोजनविरहेणानिवेश्यतया तदवच्छिन्नकार्यता घटितलक्षणसम्भव:। परामर्शाव्यवहितोत्तरत्वावच्छिन्नं प्रति परामर्शस्य समवाय सम्बन्धेन हेतुत्वे यत्र परामर्शाव्यवहितोत्तरमनुमितिक्षणे घटात्मगतद्वित्वमुत्पन्नं तत्रतादृश द्वित्वस्य समयावसम्बन्धेन घटेऽपि सत्वात्। तत्र समवायेन परामर्शाभावात् व्यभिचार इत्यपि वक्तुमशक्यम्। यतोहि–ज्ञानत्वस्यानुमितित्वस्य वा कार्यतावच्छेदककोटो निवेशनीयतया किं पक्षसाध्यविषयताया: निवेशेन इति वाच्यम्, अप्रामाण्यज्ञानव्यक्तिनां कारणतावच्छेदककार्यतावच्छेदककुक्षौ निवेशस्यावश्यकतयाऽप्रामाण्यज्ञानव्यक्तीनां तत्तद्व्यक्तित्वेनोत्तेजकतामते कार्यतावच्छेदक कुक्षौ तत्तदप्रामाण्यज्ञानाभावकूटमनिवेश्य लाघवेन पक्षसाध्यकत्वनिवेश:। यत्र प्रथमं भाविज्ञानं धूमाभाववति धूम प्रकारकमित्यप्रामाण्यज्ञानं तत: वह्निव्याप्य धूमवान् घटव्याप्यपटवांश्चेति समूहालम्बनपरामर्शस्ततो घटवानित्यनुमितिस्ततो वह्निमानित्यनुमितिस्तत्र घटानुमितिक्षणे वह्न्यनुमितिवारणाय कारणतावच्छेदक कोटौऽप्रामाण्यज्ञानस्योत्तेजकत्वं वाच्यम्, तत्रैव घटानुमित्यनुपपत्तिवारणाय कार्यतावच्छेदककुक्षावप्रामाण्यज्ञानस्योत्तेजकत्वम् अन्यथा तस्यापि धूमपरामर्शा–व्यवहितोत्तरत्वेन तत्राप्रामाण्यज्ञानाभावविशिष्टधूमलिंगक परामर्शाभावात्, तत्क्षणे घटानुमितिर्न स्यात्। यद्यपि तादृशाप्रामाण्यज्ञानास्कन्दित धूमालोकलिंगक–समूहालम्बनपरामर्शोत्तरं पर्वते वह्न्यनुमितौ व्यभिचारवारणाया–

प्रामाण्यज्ञानव्यक्त्यभावानां कार्यतावच्छेदककुक्षावन्तर्भावस्य साध्यपक्ष–कत्वादिनिवेशेऽपि आवश्यकत्वं, तथापि उत्तेजकस्थले तादृशप्रामाण्यज्ञान–व्यक्तेरूत्तेजकत्वापेक्षयासाध्यपक्षकत्वनिवेशस्यैवोचितत्वात्। किञ्च साध्यपक्ष–कानुमितिनिष्ठ इत्यादिरीत्या निवेशे समूहालम्बनकार्यतावारणाय कार्यतायां कारणताया निरूपित कार्यतावत्वस्वभिन्नकारणता निरूपितकार्यतावत्वोभय सम्बन्धेन कारणतावदन्यत्वरूपविशेषणान्तरं देयमेवेत्यग्रे व्यक्तिभविष्यति।

नन्वेवमपि तादृशंकार्यताविषयकत्वावच्छिन्न जन्यता निरूपित जनकतानिवेशेनैव सामञ्जस्ये साक्षात्कारद्वयं किमर्थं किमर्थञ्च द्वितीयकल्पानुधावनमिति चेन्न प्रथमसाक्षात्कारपदानुपादाने पर्वतोवह्निमान् धूमादित्यादौ घटाभाववद् भूतले अतिव्याप्तिः स्यात्। तत्र पर्वतो वह्निव्याप्य धूमघटवान् इत्येकत्रद्वयमिति रीत्या भासमानज्ञानीयघटत्वांवच्छिन्न प्रकारता निरूपित पर्वतत्वावच्छिन्नविशेष्यतायाः वह्निव्याप्यधूमवत्वावच्छिन्न प्रकारतानिरूपितत्वेन कार्यतावच्छेदकतया तदवच्छिन्न प्रतिबध्यता निरूपितप्रतिबन्धकतावत् प्रमाविषयत्वात्। न च तादृशकार्यतावच्छेदक प्रकारत्वावच्छिन्नत्वस्यैव प्रतिबध्यतायां निवेश इति तज्ज्ञाने प्रकारताद्वयोपगमेन तादृशप्रतिबध्यतायाः असाधारणतया नोक्तदोष इति वाच्यम् एवमपि वह्निव्याप्यधूमवन्तौ पर्वतघटाविति द्वयोरेकमितिरीत्याज्ञानीयधूमत्वावच्छिन्नप्रकारत्वावच्छिन्न प्रतिबध्यता निरूपित प्रतिबन्धकतावत् प्रमाविषयत्वस्य धूमाभाववद् घटे सत्वादतिव्याप्त्यापत्तेः। न कार्यतानवच्छेदकविषयत्वानवच्छिन्नत्वस्य प्रतिबध्यतायां निवेशेनैव तद्दोषवारणं सम्भवति इति वाच्यम्, ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभाववद् ह्रदादावव्याप्त्यापत्तेः तज्ज्ञानीयप्रतिबध्यतावच्छेदकत्वस्य महानसीय–वह्निमानित्याकारकज्ञानीय ह्रदत्वावच्छिन्न विशेष्यतानिरूपित महानसीवह्नित्वावच्छिन्नप्रकारताव्यक्तौ सत्वात् सामान्याभावप्रतिबध्यत्व–स्यानुगतरूपेण वह्नित्वपर्याप्त्यनिवेशेन ज्ञानद्वयसाधारणत्वात् तस्याश्च कार्यतानवच्छेदकत्वात्।

एवं घटो गगनवानित्यादौ अवृत्तिगगनादावव्याप्तिः, तादृश दोषविषयकनिश्चयप्रतिबध्यत्वस्य कार्यतानवच्छेदकनिर्द्धर्मितानवच्छेदक- कगगनवानिति ज्ञानीयगगनत्वावच्छिन्नप्रकारत्वावच्छिन्नत्वात् बाधज्ञानीय प्रतिबध्यतायाः गगनवान् घटो गगनवानित्यादिज्ञानसाधारणत्वात्। न च तादृश कार्यतानवच्छेदक विषयताशून्यज्ञानीयविषयित्वावच्छिन्नत्वेन प्रतिबध्यता निवेश्या, तथा च तादृशकार्यतानवच्छेदक महानसीयवह्नित्वावच्छिन्न विषयताशून्यह्रदो वह्निमानित्यनुमितिमादाय, तादृशनिर्धर्मितावच्छेदकज्ञानीयविषयताशून्यघटो गगनवानिति ज्ञानमादाय लक्षणसमन्वयसम्भवान्न पूर्वोक्तदोषावकाश इति वाच्यं, तादृशकार्यतानवच्छेदकनिरवच्छिन्नविषयताशून्यत्वस्य क्वापि प्रतिबध्य- ज्ञानेऽसत्वेनासम्भवापत्तेः। न च कार्यतानवच्छेदक विषयताशून्यत्वपदेन तादृशकार्यतावच्छेदकविषयता· विशिष्टान्यत्िषयताशून्यत्वस्य विवक्षणान्नदोषः वैशिष्ट्यञ्च स्वतादात्म्य स्वावच्छिन्नत्व स्वनिरूपितत्व स्वानिरूपितावच्छेदकत्व स्वावच्छेद्यनिरूपितावच्छेद्य स्वावच्छेद्यनिरूपितत्वैतदन्यतम सम्बन्धेन।

अत्र प्रथम द्वितीयसम्बन्धनिवेशश्च ह्रदो वह्निमान् इत्यत्र ह्रदत्वावच्छिन्नविषयतायाः ह्रदत्वप्रकारता निरूपित निरवच्छिन्नविशेष्यतायाश्च संग्रहाय। तृतीय– चतुर्थसम्बन्धनिवेशश्च धूमाभाववद् वृत्ति वह्निरूपव्यभिचारेऽव्याप्तिवारणाय, अन्यथा धूमाभाववद् वृत्ति वह्निमान् तादृश आलोकवान् धूमाभाववद् वृत्तिमान् इत्यादिनानाहेतुतावच्छेदकावगाहि हेतुतावच्छेदकानवगाहिनानाविधपरामर्शानां व्याप्त्यवच्छिन्नप्रकारता- शालिनिश्चयत्वेनैक रूपेणैककारणतया कार्यतावच्छेदककोटौ एकधर्मावच्छिन्नं प्रति व्यापकसामानाधिकरण्यादिनानाविधव्याप्त्यवगाहिपरामर्शस्य कारणतायां व्यभिचारवारणाय निवेशनीयाव्यवहितोत्तरत्वशरीरे पूर्वोक्तपरामर्शानामेकरूपेणैव प्रवेशात्, हेतुतावच्छेदकवह्नित्वादिनिष्ठनिरवच्छिन्नप्रकारता निरूपित विशेष्यतायाः व्याप्त्यादिप्रकारतानिरूपित धर्मविषयतायाश्च तादृशानुमितिनिष्ठ कार्यतानवच्छेदकतया तच्छून्यत्वस्य व्यभिचारज्ञानप्रतिंबध्यज्ञानेऽसत्वादिति पंचमषष्ठमसम्बन्धनिवेशश्च पर्वतो वह्न्यभाववानित्यादौ वह्निमत्

पर्वतरूपबाधसंग्रहाय अन्यथावह्न्यभावव्याप्यहेतुमत्ता परामर्शस्य लाघवादवच्छिन्न प्रतियोगिताकत्वसम्बन्धावच्छिन्न वह्नित्वनिष्ठप्रकारतानिरूपिताभावत्वावच्छिन्न विशेष्यत्वावच्छिन्नविधेयतात्वेनवह्न्यभावत्वावच्छिन्न विधेयताशाल्यनुमितित्वा- वच्छिन्नं प्रति कारणतया वह्नि निष्ठवह्नित्वप्रकारता निरूपिता या निरवच्छिन्नविशेष्यतात्वाभावनिष्ठ विशेष्यत्वादीनां कार्यतानवच्छेदकतया तच्छून्यत्वस्य बाधज्ञानप्रतिबध्यज्ञानेऽसत्वादव्याप्त्यापत्तेरिति वाच्यम्। पर्वतो धूमवान् गगनादित्यादौ आधेयत्वप्रतियोगित्वोभयाभाववत् गगनेऽतिव्याप्त्यापत्तेः- तादृशकार्यतानवच्छेदकविषयताशून्यत्वस्य गगनव्यापकधूमसामानाधिकरण्य- धूमाधिकरणनिरूपिताधेयत्व धूमाभावव्यापकीभूताभावप्रतियोगित्ववद् गगनवान् पर्वत इति व्याप्तिद्वयस्यैकत्रद्वयमिति रीत्यावगाहीद् परामर्शे सत्वात्। न च तथापि यत् किचिंत् कार्यतावच्छेदकीभूत विषयताविशिष्टान्यविषयताशून्यत्वस्य ज्ञाने विशेषणादेव तद्वारणम्, तथाहि तादृशपरामर्शात्मकज्ञानस्यापि प्रातिस्विकरूपेण एकामेकां व्याप्तिमादायैव कारणत्वात्। यत्किञ्चिद् कार्यतावच्छेदक- विषयतापदेनान्वयव्याप्ति घटिततादृशपक्षतावच्छेदकावच्छिन्न विशेष्यतामुपादाय तद्विशिष्टान्यत्वस्य व्यतिरेकव्याप्तिघटिततादृशपक्षतावच्छेदकावच्छिन्न विशेष्यतायां सत्वेन तच्छून्यत्वस्योक्तपरामर्शे विरहात्। न च यत्किञ्चित्निवेशेऽननुगमः, तत्पक्षकतत्साध्यकतद्धेतुकानुमितिनिष्ठकार्यता विशिष्ट प्रतिबध्यतायाः विवक्षणात्, वैशिष्ट्यञ्च स्वावच्छेदकविषयताविशिष्टान्यविषयताशून्यज्ञानीयविषयत्वावच्छिन्नत्व सम्बन्धेन सम्बन्धघटकविषयतावैशिष्ट्यं प्रागुक्तान्यतम सम्बन्धेन निवेशनीयमिति चेन्न, ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभाववद्वृत्तिधूमवह्न्यभाववद- वृत्यालोकोभयाभाववद् ध्रदेऽतिव्याप्तिः, एकत्र द्वयमितिरीत्या वह्न्यभाववदवृत्ति धूमालोकोभयवान् इति ज्ञाने उभयसाधारणसाध्याभाववदवृत्तित्वावच्छिन्न प्रकारताशालि निश्चयाव्यवहितोत्तरत्वघटितधर्मावच्छिन्नयत् किञ्चित् कार्यतानवच्छेदकविषयताशून्यत्वस्याक्षतत्वात्। एवमव्यवहितोत्तरत्वस्य कार्यतावच्छेककोटो निवेशनीयतया अप्रामाण्यज्ञानानामनुगतरूपेणोत्तेजकतामते पक्षसाध्यविषयतायाः प्रयोजनविरहेण कार्यतावच्छेदककुक्षावनिवेशनीयतया

तादृशकार्यत्वऽप्रसिद्धयाऽसम्भवापत्तेर्दुर्वारत्वात् गौरवाच्चेति दिक्।

ननु अनुमितिनिष्ठकार्यतासाक्षात्कारजनकसाक्षात्कारीयविषयताश्रय-ग्रहनिष्ठप्रतिबध्यतानिवेशे प्रकृतानुमितिनिष्ठकार्यताद्वयविषयकसमूहालम्बना साक्षात्कारजनकसाक्षात्कारीयविषयतायां तादृशकार्यतासाक्षात्कारत्वावच्छिन्न जन्यतानिरूपितजनकताश्रय समूहालम्बनसाक्षात्कारीयविषयताद्यादायपर्वतोवह्निमान् धूमादित्यादौ वह्न्यभाववद्ह्रदादावतिव्याप्तिः, अतस्तादृशकार्यता-विषयकत्वसाक्षात्कारत्वैतद्धर्मद्वयावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकीभूत-साक्षात्कारविषयताश्रयग्रहनिष्ठप्रतिबध्यता निवेशे च प्रथमसाक्षात्कारप्रवेशस्य किं प्रयोजनमिति चेन्न, तादृशानुमितिनिष्ठकार्यताविषयकत्वावच्छिन्न जन्याऽनिवेशे च तादृशानुमितिस्तादृशपरामर्शकार्यतावती घटवद्भूतलविषयक-ज्ञानादित्यनुमितिनिष्ठतादृशकार्यता विषयकानुमितित्वावच्छिन्नजन्यता निरूपितजनकतावच्छेदिका या प्रकृतपक्षधर्मिकपरामर्शीयहेतुविषयता तदाश्रय-हेतुभूतघटवद्भूतलज्ञाननिष्ठप्रतिबध्यतामादाय पर्वतो वह्निमान् धूमादित्यादौ घटाभाववद् भूतलेऽतिव्याप्तिः।

तन्निवेशे च तादृशकार्यताविषयकत्वावच्छिन्नत्वस्यानुमितित्वा-वच्छिन्नत्वस्य च सत्वेऽपि साक्षात्कारत्वावच्छिन्नत्वविरहान्नातिप्रसंगः। अत्र द्वितीयसाक्षात्कारत्वनिवेशेऽपि तादृश कार्यतासाक्षात्कारत्वावच्छिन्न जन्यतानिरूपितजनकतावच्छेदकीभूताया प्रकृतपक्षसाध्यविषयकानुमितित्वेन घटवद्भूतलमिति ज्ञानावगाहि साक्षात्कारीयविषयतातदाश्रयग्रहनिष्ठप्रतिबध्यतामादाय पुनः घटाभाववद् भूतलेऽतिव्याप्तिः, तद्वारणाय यद्धर्मावच्छिन्नविषयता तादृशजनकतावच्छेदिका तद्धर्मावच्छिन्न ग्रहनिष्ठप्रतिबध्यतानिवेशे च परामर्शघटक-ज्ञानत्वादिकमादाय स एव दोष इति।

यद्धर्मावच्छिन्नग्रहत्वव्यापकत्वं, यद्धर्मावच्छिन्नविषयताव्यापकत्वं वा तादृशजनकतायां निवेशनीयम्, तथा च तादृशानुमितित्वावच्छिन्न-ग्रहत्वाश्रयीभूतशब्दादौ तादृशजनकताविरहेणासम्भवः स्यादतो

द्वितीयसाक्षात्कारनिवेशः एवञ्च तादृशसाक्षात्कारीययद्रूपावच्छिन्न–विषयताव्यापकत्वमित्यादिरीत्या निवेशे न कश्चिद् दोषः। ननुसाक्षात्कारस्थले वास्तविकतत्तद् व्यक्तिसाक्षात्कारत्वावच्छिन्नं प्रति प्रतियोग्यनुयोगिव्यक्ति–साक्षात्कारत्वेनैव कारणतया न तु तद्तद् धर्मघटिता, तथा च तादृशानुमितित्वावच्छिन्नकार्यतानिष्ठाविषयतासम्बन्धावच्छिन्नावच्छेदकतानिरूपक जन्यता निरूपित जनकता निरूपित विषयत्वनिष्ठावच्छेदकतानिरूपिताधेयत्व सम्बन्धावच्छिन्नायाऽवच्छेदकता तत्तद्ग्रहनिष्ठप्रतिबध्यता निवेशे तादृशकार्यता विषयकानुमितित्वावच्छिन्नजन्यतानिरूपित साध्यनिष्ठविषयता निष्ठावच्छेदकतायां साध्यतावच्छेदकतादृशकार्यत्वावच्छिन्नत्वस्यावच्छेदकतया साध्यस्याधेयता–सम्बन्धेनावच्छेदकत्वात्, भ्रमसाधारणसाध्यतावच्छेदकावच्छिन्न विधेयता–शाल्यनुमितित्वस्यैव परामर्शजन्यतावच्छेदकत्वात्, एवञ्च प्रथमसाक्षात्कारत्वाऽनिवेशे वह्निमान् धूमादित्यादौ घटाभाववद्भूतले प्रागुक्तयुक्त्या नातिव्याप्तिः। एवं तादृशसाक्षात्कारं प्रति तादृशानुमितित्वादिनाऽन्यावगाहिज्ञानस्य कारणत्वाभावेन द्वितीयसाक्षात्कारस्यापि वैयर्थ्यमिति चेत्, अत्र केचित् तद्व्यक्तेः स्वरूपतो भानमते प्रथमसाक्षात्कारत्वाऽनिवेशे प्रागुक्तवातिव्याप्तिः, स्वरूपतः तद्व्यक्तिनिष्ठविधेयताकानुमितिनिष्ठजनकतायां साध्यतावच्छेदकावच्छिन्न–त्वेनावच्छेदकत्वासम्भवेन साध्यनिष्ठविधेयतात्वेनैवावच्छेदात् तादृश जन्यता निरूपितप्रकृतहेतुभूतघटवद्भूतलमिति ज्ञाननिष्ठविषयताशाालि परामर्शनिष्ठ–जनकतामादाय निष्ठत्वसम्बन्धावच्छिन्नावच्छेदकतायाः हेतुभूततादृशज्ञाने सत्वात्।

द्वितीयसाक्षात्कारत्वानिवेशे तादृशकार्यतासाक्षात्कारत्वावच्छिन्नं प्रति तदाश्रयव्यक्तिसाक्षात्कारत्वेन कारणत्वेऽपि तादृशानुमितिव्यक्तेः घटवद्भूतलमिति ज्ञानस्य चानुमितित्वेन यः साक्षात्कारस्तस्यापि हेतुतया तन्निरूपिता–नुमितित्वनिष्ठप्रकारतानिरूपितविशेष्यतायाः ऐक्येन तादृश जनकतावच्छेदकताश्रय घटवद् भूतलमिति ज्ञानमादाय पूर्वोक्तातिव्याप्तिवारणाय यद्विषयतायाः साक्षात्कारत्वव्यापिका जनकता तद्विषयताश्रयग्रहनिष्ठ प्रतिबध्यतेत्यादिना लक्षणं वक्तव्यं, तत्र साक्षात्कारत्वानिवेशेशाब्दादिकमादायासम्भव इत्याहुः तच्चिन्त्यम्।

भूतविषयताशून्यत्वनिवेशेनैव तद्वारणमिति।

अथ यादृश समुदायत्वावच्छिन्नानुयोगिताक पर्याप्तिकावच्छेदकता-कनिरूपकताक विलक्षणविषयितायां मानाभावेन लक्षणायोगः, न च वह्न्यभाववद्ह्रदमहं जानामीत्यनुव्यवसायं प्रति वह्न्यभाववान्, ह्रद इति यथार्थज्ञानस्य कारणतया कार्यकारणभावानुरोधादेव तत्स्वीकारः कार्यकारणभावश्च रूपवृत्तिविषयताशालि ज्ञान प्रत्यक्षं प्रति रूप वृत्तिविषयताशालिज्ञानत्वेन कारणेति। उभयत्र विषयतायां रूपवृत्तिवञ्च स्वनिरूपित निरूपकतात्वावच्छिन्न प्रतियोगिताक पर्याप्त्यनुयोगितावच्छेदकसम्बन्धश्च तादात्म्यमिति वाच्यम्, तादृशानुव्यवसायं प्रति वह्न्यभाववान् ह्रद इति यथार्थज्ञानस्य वह्नित्वावच्छिन्न वह्नीतरावृत्ति वह्निनिष्ठविषयतानिरूपिताऽभावत्वावच्छिनाऽभावेतरावृत्यभाव निष्ठविषयता निरूपितह्रदत्वावच्छिन्न ह्रदेतरावृत्ति ह्रदनिष्ठविषयताशालिज्ञानत्वेन कारणता-कल्पनात्। वह्नित्वावच्छिन्नत्वानुपादाने घटत्वादिना वह्न्यवगाहि घटाभाववान् ह्रद इति ज्ञानोत्तरं तादृशानुव्यवसायस्य स्यादतस्तन्निवेशः।

वह्नीतरावृत्तित्वपदेन वह्निघटोभयावगाहिज्ञानव्युदासः। वह्निनिष्ठेति स्वरूपकथनम्।

एवञ्च तादृशविषयताशालिज्ञानप्रत्यक्षं प्रति तादृशविषयताशालि ज्ञानत्वेन कारणतायाः वक्तव्यत्वात् नानुपपत्तिरिति चेन्न, विलक्षणविषयतायाः अस्वीकारे तु वह्न्यभाववद् ह्रदत्वगतसमुदायत्ववृत्तिविषयता सम्बन्धेन वह्न्यभाववद् ह्रदविषयकं ज्ञानं वह्न्यभाववद्ह्रदवदिति प्रतीत्यनुपपत्तेः, न हि तादृशप्रतीतिः विषयतासम्बन्धेनोपपादयितुं शक्या, अन्यधर्मावच्छिन्नस्य संसर्गो नान्यधर्मावच्छिन्नस्येति नियमेन वह्नित्वादिगतैकत्ववृत्ति विषयतानां प्रत्येकं वह्नित्वावच्छिन्नस्य संसर्गत्वं न तु वह्न्यभाववद् ह्रदत्वावच्छिन्नस्येति, तादृशज्ञाने चावच्छेदकता प्रकारताविशेष्यताभिन्ना वह्न्यभाववद् ह्रदत्वावच्छिन्न विषयता विलक्षणा काचिदभ्युपेतव्येति, यदि च तज्ज्ञानीयनिरूप्यनिरूपकभावापन्नविषयताया एव संसर्गत्व स्वीकारे तादृशप्रतीतेर्निर्वाहः तदा वह्न्यभाववद् ह्रदविषयकं ज्ञानं

तादृशविषयतया अभाववद् ह्रदवदिति प्रतीतेः प्रमात्वापत्तिः, विषयतायाः एकज्ञानीयह्रदनिष्ठा या अवैलक्षण्यादित्यवश्यं विलक्षणविषयस्वीकारः।

अथवा वास्तव ह्रदो वह्न्यभाववान् इति ज्ञाने ह्रदत्वावच्छिन्न विशेष्यतानिरूपित विषयिता व्यक्तावेव तादृशज्ञानावच्छेदेन विलक्षणनिरूपकतानिरूपितत्वोपगमात्, तेन वह्नित्वादिना घटावगाहि भ्रमज्ञाने तादृशविषयितासत्वेन तादृशज्ञानानन्तरं वह्न्यभाववद् ह्रदमहं जानामीत्यनुव्यवसाय वारणाय तादृश ज्ञानावच्छेदेन विलक्षणनिरूपकता निरूपितत्वानुपगमात् इत्युक्तम्। यदि विषयतायां तादृशविलक्षणनिरूपकतानिरूपितत्वस्वीकारः तदा तादृशविषयतायाः स्वनिरूपकत्व सम्बन्धेन ज्ञाने सत्वेन तादृशसम्बन्धस्य वृत्यनियामकतया तादृशसम्बन्धेन तादृशविषयत्वाधिकरणत्वाऽप्रसिद्ध्या तज्ज्ञानस्य तादृशविषयतानिष्ठ निरूपकता निरूपितत्वस्यावच्छेदकत्वासम्भवः तदधिकरणस्यैव तन्निष्ठधर्मावच्छेदकत्वनियमात्।

## यद् विषयकत्वेन यादृशविशिष्टविषयकत्वेन इति दीधितिकाराः—

तथा च यादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताक विषयता व्यापिकाप्रकृतानुमिति प्रतिबन्धकतातादृशसमुदायत्वावच्छिन्नानुयोगिताक पर्याप्तिकावच्छेदकताक निरूपकतावत्वमनतिरिक्तवृत्तित्वरूपावच्छेदकता घटितस्य, यद्रूपावच्छिन्न निरूपकताकविषयत्वावच्छिन्न प्रकृतानुमिति प्रतिबन्धकता तद्रूपावच्छिन्नत्वमिति स्वरूपसम्बन्धरूपावच्छेदकताघटितस्य।

अथ विषयतायाः प्रतिबन्धकतावच्छेदकत्वे किम् मानमिति? न च विषयताया प्रतिबन्धकत्वव्यधिकरणतयाऽवच्छेदकत्वमेवं न सम्भवतीति वाच्यम्। निरूपकत्वसम्बन्धेन तत्सामानाधिकरण्यादिति वाच्यम् विनिगमनाविरहेण विषयितायामपि तत्स्वीकारादिति, अत एव स्वनिरूपित विषयतावत्वसम्बन्धेन तथात्वेन प्रतिबन्धकताघटकसम्बन्धस्य गुरुत्वाभाव इति।

न च विषयतायामवच्छेदकत्वे ह्रदो वह्निमानितिबुद्धिं प्रति

सावच्छिन्नावच्छेदकताक प्रतियोगिताकवह्न्यभाववान् ह्रद इति ज्ञानस्य प्रतिबन्धकत्वाभाव सम्पतये वह्नित्वनिष्ठावच्छेदकतायां निरवच्छिन्नत्वं निवेश्य सौलभ्यम्। तथाहि वह्नित्वनिष्ठ निरवच्छिन्नावच्छेदकताकविषयिता निरूपिताभावत्वावच्छिन्न विषयता निरूपितेत्यादि क्रमेण प्रतिबन्धकता वाच्या। विषयतायाः तदवच्छेदकत्वे केन रूपेण प्रतिबध्यप्रतिबन्धकभाव इति वाच्यम्। यादृशविषयतयोर्निरूप्यंनिरूपकभावस्तन्निरूपितविषयतयोरवच्छेद्यावच्छेदकभाव इति नियमेन तन्निरूपितत्वं यस्य ह्रदाश्रय निरूपितत्वमपि तस्येति नियमात् विषयनिरूपितत्वस्यात्र लाभेन वह्न्यभाववान् ह्रद इति ज्ञानस्य निरवच्छिन्न समवायत्व निरूपितावच्छेदकत्वावच्छिन्न संसर्गित्वावच्छिन्न वह्नित्वनिरूपकता–वच्छेदकत्वावच्छिन्न प्रकारित्वावच्छिन्न निरवच्छिन्नाभावत्वनिरूपिता–वच्छेदकत्वावच्छिन्न विशेष्यत्वावच्छिन्न स्वरूपत्वनिरूपिताऽवच्छेदक–त्वावच्छिन्नसांसर्गित्वावच्छिन्नाऽभावत्वनिरूपितावच्छेदकत्वावच्छिन्न प्रकारित्वा–वच्छिन्न समवायत्वनिरूपितावच्छेदकित्वावच्छिन्न संसर्गित्वावच्छिन्न ह्रदत्वनिरूपितावच्छेदकत्वावच्छिन्न विशेष्यितावज्ज्ञानत्वेन प्रतिबन्धकता सौलभ्यात्। अत्र निरवच्छिन्नत्वमवच्छेदकित्वानवच्छिन्नत्वम् तच्च स्वावच्छिन्नत्वस्वभिन्ना–वच्छेदकित्वावच्छिन्नत्वोभयसम्बन्धेनावच्छेदकता विशिष्टान्यत्वम्, तथा च वह्नित्वत्वनिरूपितावच्छेदकित्वावच्छिन्नत्वस्य वह्निनिरूपितावच्छेदकित्वा–वच्छिन्नत्वस्य च वह्नित्वनिरूपितावच्छेदकतायां सत्वेन नोक्तज्ञानस्य प्रतिबन्धकत्वम्। एवं विषयतायां निरवच्छिन्नत्वमवच्छेदकत्वाविशिष्टान्यत्वम्, वैशिष्ट्यं च स्वनिरूपितत्व स्वभिन्नावच्छेदकता निरूपितत्वोभयसम्बन्धेन तथा च वह्नित्वत्वनिष्ठावच्छेदकतानिरूपितत्वस्य वह्निनिष्ठायाः प्रतियोगित्व सम्बन्धावच्छिन्न प्रकारतावच्छेदकतानिरूपितत्वस्य च वह्नित्व निष्ठावच्छेदकता रूपविषयतायां सत्वेन न क्षतिः।

वह्निमानिति बुद्धिं प्रति वह्नित्वबदभाववानिति ज्ञानस्य विरोधित्वन्न सम्भवति, तथा च विषयतयोः परस्परनिरूप्यनिरूपकभावः, अथवा तादृश विलक्षणविषयितायां प्रतिबन्धकता निरूपित स्वरूपसम्बन्धरूपावच्छेदकतात्व–

विवक्षायैव एवं विषयतयोः निरूप्यनिरूपकभावस्यावश्यकतया वह्नित्वनिष्ठावच्छेदकतानिरूपितत्वस्य, वह्नित्वनिरूपितावच्छेदकित्वावच्छिन्नत्वस्य समानतया न लाघवगौरवस्यावकाश इति।

न च विषयताया प्रतिबन्धकतावच्छेदकत्वे तत् कुक्षौ संशयान्यत्वनिवेशेन गौरवं, संशये प्रतिबन्धकता वारणाय ह्रदत्वावच्छिन्नविशेष्यतायां वह्नित्वावच्छिन्न प्रकारतानिरूपित विशेष्यत्वानवच्छिन्नत्वस्य गौरवेण निवेशायोगात्, सामान्यतो विशेष्यत्वानवच्छिन्नत्वस्य न निवेशः, तथाहि वह्न्यभाववान् ह्रद इति ज्ञानस्यापि संग्रहानुपपत्तिः, अभावप्रकारतानिरूपित ह्रदनिष्ठविशेष्यतायाः ह्रदत्वप्रकारतानिरूपित निरवच्छिन्न ह्रदनिष्ठ विशेष्यत्वावच्छिन्नत्वात् विषयिताया: प्रतिबन्धकतावच्छेदकत्वे तु संशयवारणमभावत्वावच्छिन्न प्रकारिताया: प्रकारित्वानवच्छिन्नत्वदानेनैव सम्भवति। संशय समुच्चययोर्वैलक्षण्यानुरोधने कोटित्वाख्यविषयतानिरूपित विषयितयोरवच्छेद्यावच्छेदकभावस्य सत्प्रतिपक्षेस्वीकारादिति वाच्यम्, संशयसमुच्चययोर्वैलक्षण्यानुरोधेन विषयताया: प्रतिबन्धकतावच्छदेकत्ववादिना कोटितानिरूपित ह्रदत्वावच्छिन्नविशेष्यताद्वयनिरूपित ह्रदत्व निष्ठाऽवच्छेदकद्वयोरवच्छेद्यावच्छेदकभावं स्वीकृत्य तादृशावच्छेदकतायाम– वच्छेदकत्वानवच्छिन्नत्वं देयमिति। कल्पद्वयोः साम्यं सुष्ठु। एवमनाहार्यत्वादीनामपि निवेशनं समानमिति विनिगमनाविरहेण विषयित्वं विषयत्वं वा प्रतिबन्धकतावच्छेदकं भवत्येव।

अथ यत् पदस्य यद्रूपावच्छिन्नत्वपरत्वेऽपि यद्रूपपदेन किं धर्त्तव्यम्? यदि सामानाधिकरण्यसम्बन्धेन वह्न्यभावविशिष्ट ह्रदत्वमुच्यते। तदाधर्मितावच्छेदक– विधया ह्रदत्वानवगाहि सामानाधिकरण्यसम्बन्धेन वह्न्यभाववद् ह्रदत्ववानिति ज्ञानेऽपि वह्न्यभावविशिष्ट ह्रदत्वावच्छिन्नविषयतासत्वेनानुमिति प्रतिबन्धकताऽतिरिक्तवृत्तित्वादसम्भवः। यदि च वह्न्यभाव ह्रदत्वोभयमुच्यते तदा एकत्र द्वयमपि रीत्या जायमाने तादृशोभयावगाहि ज्ञाने (वह्न्यभाव ह्रदत्ववानिति ज्ञाने) तस्य तथात्वेनानुमिति प्रतिबन्धकतातिरिक्तवृत्तित्वात् पुनरसम्भव इति चेन्न।

यादृशसमुदायवृत्तिसमुदायत्वावच्छिन्नानुयोगिताक पर्याप्तिकावच्छेदकताक निरूपकताक विषयताव्यापिका प्रकृतानुमिति प्रतिबन्धकतातादृश समुदायत्वा-वच्छिन्नानुयोगिताक पर्याप्तिकावच्छेदकताक निरूपकतावत्वम् परिष्कृतम्। तथा च वह्नि वह्नित्वाभावाभावत्वह्रदह्रदत्वगतसमुदायत्वस्यैव यद्रूपपदेन ग्रहणात्, तादृश समुदायत्वावच्छिन्नानुयोगिताक पर्याप्तिकावच्छेदकताक निरूपकताकविषयत्वं वह्न्यभाववान् ह्रद इति ज्ञाने एव स्वीक्रियते, न तु सामानाधिकरण्येन वह्न्यभावविशिष्ट ह्रदत्ववानिति ज्ञाने, तदुत्तरं वह्न्यभावविशिष्टह्रदविषयकज्ञानवान-हमित्यनुव्यवसायाभावात् तथा च नासम्भव इति संसर्ग विधया निवेशस्तु प्रकृतानुमितिप्रतिबन्धकतावृत्तिरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताक निरूपकतावत्वम्, रूपे प्रतिबन्धकता वृत्तित्वञ्च स्वावच्छिन्नानुयोगिताक पर्याप्तिकावच्छेदकताकनिरूपकताक विषयितासमानाधिकरण प्रतियोगितावच्छेदकत्व सम्बन्धावच्छिन्न स्वनिष्ठावच्छेदकताकभेदवत्व सम्बन्धेन। तादृशञ्च रूपं वह्निवह्नित्वाभावाभावत्वह्रदह्रदत्वगतसमुदायत्वं तदवच्छिन्नानुयोगिताक पर्याप्तिका ऽवच्छदेकताकनिरूपकताक विषयतायाः ह्रदत्व धर्मितावच्छदेक वह्न्यभाववानिति यथार्थज्ञाने एव सत्वं नान्यत्र, अतोऽयथार्थसमूहालम्बन एकत्र द्वयमिति रीत्या ज्ञानानामुत्तरक्षणे न वह्न्यभाववद् ह्रदमहं जानामीत्यनुव्यवसायः।

प्रकारमुद्रया च प्रकृतानुमितित्वव्यापकप्रतिबध्यता निरूपितप्रतिबन्धकता-वृत्यभावीयावच्छदेकतात्वावच्छिन्न प्रतियोगिता निरूपित प्रतियोगित्वनिष्ठावच्छदेकता निरूपित भेदनिष्ठावच्छेदकतानिरूपितवृत्तित्व-निष्ठावच्छदेकता निरूपित अधिकरणनिष्ठावच्छदेकता निरूपित विषयित्वनिष्ठावच्छेदकता निरूपित निरूपकत्वनिष्ठावच्छेदकतानिरूपिता-वच्छेदकत्वनिष्ठावच्छेदकता निरूपितावच्छदेकत्वनिरूपितपर्याप्तिनिष्ठावच्छेदकता निरूपितानुयोगित्वनिष्ठावच्छेदकता निरूपितावच्छिन्नत्वसम्बन्धावच्छिन्ना-वच्छेदकतावद्रूपावच्छिन्नानुयोगिताक पर्याप्तिकावच्छेदकताकनिरूपकतात्त्वम् परिष्कारः। अभाव प्रतीतिश्च रूपावच्छिन्नानुयोगिताक पर्याप्तिकावच्छेदकताक-निरूपकताकविषयित्वाधिकरण वृत्तिभेदप्रतियोगितावच्छेदकत्वन्नास्तीति।

यद्विषयकत्वेनेत्यस्य यद्रूपावच्छिन्न विषयकत्वेनेत्यर्थाऽकरणेऽनतिरिक्त वृत्तित्वरूपावच्छेदकताऽप्रवेशे च पर्वतो वह्निमान् धूमादित्यादौ वह्न्यभावाद्येकदेशेऽतिव्याप्तिः, वह्न्यभावत्वावच्छिन्न विषयतायाः अपि पर्वतधर्मिक वह्न्यनुमिति प्रतिबन्धकतावच्छेदकतया तत्वस्य वह्न्यभावादौ सत्वादतस्तादृशार्थः करणीयाः तादृशावच्छेदकत्वञ्च लक्षणो निवेश्यम्। तथा च वह्न्यभावत्वावच्छिन्न विषयतायाः प्रकृतानुमितिप्रतिबन्धकतातिरिक्ते केवल वह्न्यभाव इति ज्ञानेऽपि वर्तमानतयाऽनतिरिक्तवृत्तित्व विरहेण न तादृशविषयतामादायातिव्याप्तिः। वह्न्यभाववत् पर्वतस्याऽप्रसिद्धस्यैव न तद्रूपावच्छिन्नविषयतामादायापि दोष सम्भावना।

न च पक्षविशेष्यक भ्रमस्येव पक्षविशेषणक पर्वते वह्न्यभाव इति भ्रममादायातिप्रसंगसम्भवे पक्षविशेषणकभ्रममादायैवातिव्याप्तिप्रदर्शकपक्ष–विशेष्यकत्वोपादानमनर्थकमेव इति वाच्यम्।

यद् विषयकत्वेनेत्यादिमूलस्य यत्प्रकारकत्वेन प्रतिबन्धकत्वं तत्वमित्यर्थकरणे पक्षविशेषणकभ्रममादाय न साध्याभावादावतिप्रसंग तथाहि पर्वत विशेषणकपर्वते वह्न्यभाव इति भ्रमस्य पर्वतनिष्ठ प्रकारताकत्वेनैवार्थात् पर्वतनिष्ठप्रकारतानिरूपित वह्न्यभावनिष्ठविशेष्यताकत्वेनैव पर्वतविशेष्यक वह्न्यनुमितिं प्रति प्रतिबन्धकतया यत् पदेन पर्वतस्यैव धर्तुं शक्यत्वेन तत्वस्य पर्वते एव सत्वेन वह्न्यभावादावभावात् शिरोमण्युक्त वह्न्यभावादावति–व्याप्तिविरहात्, न च वह्न्यभावेऽतिव्याप्तिविरहेऽपि पर्वत प्रकारकत्वेन ज्ञान स्यानुमिति विरोधितया तत्वस्य पर्वते सत्वात् पर्वत एवातिव्याप्तिरिति वाच्यम्, यः प्रकारः यादृशसम्बन्धेन यादृश विशेष्ये वर्तते तादृशसम्बन्धावच्छिन्नाधेयतासम्बन्धेन तादृशविशेष्यस्तस्मिन् प्रकारे, यथा वह्न्यभावस्वरूपेण पर्वते वर्तते। पर्वतस्तु स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धेन वह्न्यभावे, एवं धूमः संयोगेन पर्वते पर्वतस्तु संयोगसम्बन्धावच्छिन्नाधेयतासम्बन्धेन धूमे पर्वते इति वस्तुस्थितिः।

एवञ्च प्रकृते पक्षविशेषणक पर्वते वह्न्यभाव इति ज्ञानस्य पर्वतो वह्निमाननित्यादि समूहालम्बनानुमितिं प्रति स्वरूपसम्बन्धावच्छिन्नाधेयता सम्बन्धेन पर्वतवत्ता धूमे नास्ति अस्ति च पर्वतमहानसान्यतरत्वे इति प्रसिद्धधूमहेतौ दुष्टताव्यवहारापत्तिविरहात्। अत: प्रसिद्धधूमहेतौदुष्टताव्यवहारोपपत्यर्थं पक्षविशेष्यकेत्युक्तम्। तथा च पक्षविशेष्यकपर्वतो वह्न्यभावान् इति भ्रमस्य स्वरूप सम्बन्धेन वह्न्यभावनिष्ठप्रकारताकत्वेन अनुमितिम्प्रति प्रतिबन्धकतया तेन सम्बन्धेन वह्न्यभाववत्ता या: प्रसिद्ध धूमे वर्तमानतया दुष्टत्वव्यवहारापत्तिस्यादेवेत्यत: यद्रूपावच्छिन्नविषयकत्वेनेति निवेशनं सार्थकमिति।

मान्यास्तु वह्नभाववद् ह्रदादिप्रकारकत्वेन यद्यपि प्रतिबन्धकता नास्ति तथापि ह्रदे वह्न्यभाव इति ज्ञानस्य ह्रदप्रकारकत्वेनाऽनुमितिं प्रति प्रतिबन्धकतया तत्वस्य वह्न्यभाववद् ह्रदेऽपि सत्वात् विशिष्टस्य विशेष्याऽनतिरिक्तत्वात् नासम्भव:। एतेन दोषप्रकारकत्वस्य प्रतिबन्धकतानवच्छेदकतयाऽसम्भवापत्या यत्प्रकारकत्वेनेत्यादि वक्तुमशक्यमिति शंका निरस्ता।

एवं चोक्तविवक्षायां पक्षविषयभ्रममादाय साध्याभावादेर्दोषासम्भवेऽपि पक्षे यद्यप्यत्रातिव्याप्ति: भवत्येव तथापि सद्धेत्वादिनिष्ठ इत्युक्त्वादुष्टलक्षणातिव्याप्तिमाकलय्य पक्षविशेषणक भ्रममादायप्रसिद्ध सद्धेत्तावतिव्याप्तेरभावात् पक्षविशेष्यकेत्युक्तमित्याह गदाधरभट्टाचार्येण यत्प्रकारकत्वेनेत्यादि:।

यद्विषयकत्वेनेत्यस्य यादृशविशिष्टविषयकत्वरूपार्थाऽकरणे स्वरूपसम्बन्धरूपावच्छेदकता प्रवेशे च यथा पर्वतो वह्निमान् धूमादित्यादि सद्धेतो वह्नभाववान्पर्वत इति भ्रममादाय वह्नभावादावतिव्याप्ति:, तथैव ह्रदो वह्निमान् धूमादित्यत्र सद्धेतावपि ह्रदधर्मिक वह्न्यनुमिति प्रतिबन्धक वह्न्यभाववान् ह्रद इति प्रमामादाय वह्न्यभावादावतिव्याप्ति: सम्भवतीति मनसि निधाय दीधितिस्थ भ्रमपदस्य निश्चयसामान्यरूपार्थ: कार्य:। यद्रूपावच्छिन्न विषयकत्वेनेति व्याख्याने तृतीयार्थोऽवच्छेदकतानतिरिक्तवृत्ति रूपैव, न तु स्वरूपसम्बन्धरूप:। तन्निवेशे

पूर्वोक्तरीत्या एकदेशेऽतिव्याप्तिदुर्वारः, तथा च विशिष्टस्य शुद्धाऽभिन्नत्वेन वह्न्यभावविशिष्ट ह्रद विषयतायाः शुद्ध ह्रदविषयतातः अभिन्नतया केवल ह्रद इत्याकारक ज्ञाने वर्तमानत्वेऽपि वह्न्यभावविशिष्ट ह्रदत्वावच्छिन्न विलक्षणविषयतायाः केवल ह्रदादि विषयक ह्रद इति ज्ञानेऽवर्तमानतया प्रतिबन्धकतानतिरिक्तवृत्तित्वान्नासम्भवः। एवमनतिरिक्तवृत्तित्वरूपा-वच्छेदकत्वनिवेशे शुद्ध वह्न्यभावत्वाद्यवच्छिन्नविषयतायाः प्रतिबन्धकतातिरिक्ते केवल वह्न्यभाव इति ज्ञाने वर्तमानतया अनतिरिक्तवृत्तित्व विरहान्नाति प्रसंगसम्भावनेति भावः।

यद्विषयकत्वेन इत्यस्य यद्रूपावच्छिन्न विषयकत्वेनेत्यर्थः विवक्षायामपि यदि तृतीयार्थोऽवच्छेदकता स्वरूपसम्बन्धरूपः निवेश्यते, तदा यद्रूपावच्छिन्न विषयता प्रकृतानुमितिप्रतिबन्धकता निरूपित स्वरूपसम्बन्धरूपावच्छेदकतावती तद्रूपावच्छिन्नमित्येव लक्षणार्थस्तथा पुनः पर्वतो वह्निमान् इति सद्धेतौ ह्रदो वह्निमान् जलादित्याद्यसद्धेतौ च केवल वह्न्यभावादावतिव्याप्तिः, केवलवह्न्यभावत्वावच्छिन्नविषयतायाः पर्वत ह्रदादि रूप पक्षविशेष्यक वह्निप्रकारकानुमिति प्रतिबन्धकता निरूपित स्वरूप सम्बन्धरूपावच्छेदकत्वात्। यदेतादृशातिप्रसंगवारणायाप्रामाण्यज्ञानाभावविशिष्टयद्रूपावच्छिन्न विषयताकत्वं प्रकृतानुमितित्व व्यापकप्रतिबध्यता निरूपित प्रतिबन्धकता निरूपित स्वरूप सम्बन्धरूपावच्छेदकतायाः पर्याप्त्यधिकरणत्वं हेत्वाभासत्वमिति लक्षणार्थः क्रियते तदा वह्न्यभाववत्वावच्छिन्न विषयतायां पर्याप्तिसम्बन्धेन प्रतिबन्धकता-वच्छेदकताविरहेण (अर्थात एकदेशीय विषयतायां स्वरूपसम्बन्धसत्वेऽपिप्रत्येके पर्याप्ति सम्बन्धेनावच्छेदकतानास्ति अस्ति च समुदाये इति तादृशावच्छेदकता पर्याप्त्यधिकरणत्वस्यैकदेशविषयतायामभावेन) यद्रूपावच्छिन्न विषयतापदेन वह्न्यभावत्वावच्छिन्न विषयतायाः धारणासम्भवान्नैकदेशे तादृशविषयतामादायाति-प्रसंग इत्युच्यते तथापि पुनरसम्भवस्तदवस्थैव, तथाहि वह्न्यभावत्वेन घटावगाहि वह्न्यभाववान् ह्रद इत्याकारक भ्रम ज्ञानस्यापि ह्रदधर्मिक वह्न्युमिति प्रतिबन्धकतया तादृशभ्रमसाधारण्यानुरोधने संयोगसम्बन्धावच्छिन्न प्रतियोगित्व सम्बन्धावच्छिन्न

प्रकारतानिरूपिताभावत्वावच्छिन्न विशेष्यत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्ना-भावत्वावच्छिन्न प्रकारता निरूपितहृदत्वावच्छिन्न विशेष्यताकनिश्चयत्वेन प्रतिबन्धकत्वं वाच्यं, तथा च वह्न्यभावविशिष्ट हृदत्वावच्छिन्न विषयतायां वह्न्यभावत्वावच्छिन्न प्रकारता निरूपित हृदत्वावच्छिन्न विषयतात्वेन प्रतिबन्धकतावच्छेदकत्वस्य वर्तमानत्वेऽपि तादृश वह्निप्रकारतानिरूपिता-भावप्रकारतानिरूपितहृदत्वावच्छिन्नविषयताकनिश्चयत्वं न निरूक्त प्रतिबन्धकतावच्छेदकता पर्याप्त्यधिकरणमिति तादृश विषयताया: यद्रूपावच्छिन्न विषयतापदेन धर्तुमशक्यतया सर्वत्रैव लक्ष्ये लक्षणागमनात्। अत: स्वरूप-सम्बन्धरूपावच्छेदकत्वं न तृतीयार्थ: किन्त्वनतिरिक्तवृत्तित्व- रूपावच्छेदकत्वमेव। तथा च यद्रूपावच्छिन्न विषयता व्यापिका प्रकृतानुमितित्व व्यापक प्रतिबध्यता निरूपित प्रतिबन्धकता तद्रूपावच्छिन्नं लक्षणार्थ:। एवञ्च वह्न्यभावविशिष्टहृदत्वावच्छिन्न विषयताव्यापिका भवति हृदधर्मिक वह्न्यनुमितित्वव्यापक प्रतिबध्यतानिरूपित वह्न्यभाववान् हृद इति निश्चयनिष्ठप्रतिबन्धकतेतितद्रूपावच्छिन्नत्वं वहन्यभाववद् हृदादौ सत्वाद् नासम्भवावकाश इति। तद्रूपावच्छिन्न विषयताप्रकृतानुमितित्वव्यापक प्रतिबध्यता निरूपित प्रतिबन्धकतानतिरिक्तवृत्ति: तद्रूपावच्छिन्नत्वरूप लक्षणार्थ करणेऽपि असम्भव: तदवस्थ एव, तथाहि हृदो वह्निमान् जलाद् इत्यादौ हृदो वह्निमान्नवेति संशये वह्निमान् हृदो वह्न्यभाववान् इत्याहार्यज्ञाने हृदो वह्न्यभाववानिदं ज्ञानप्रमेयप्रामाण्यज्ञानानास्कन्दितज्ञाने च वह्न्यभावविशिष्टहृदत्वावच्छिन्नविषयताया: वर्तमानतया तत्र च हृद धर्मिक वह्न्यनुमिति प्रतिबन्धकताविरहेण प्रकृतानुमिति प्रतिबन्धकतानतिरिक्तवृत्तित्वस्य वह्न्यभावविशिष्टहृदत्वावच्छिन्नविषयताया: अभावादव्याप्ति:, अनयैव रीत्या सर्वत्र लक्ष्ये लंक्षणागमनादसम्भव इति। तद्वारणाय मूलोक्तलक्षणघटकीभूत ज्ञानपदमनाहार्याप्रामाण्यज्ञानानास्कन्दित संशयान्यज्ञानात्मक निश्चय परम्। एवञ्चानाहार्य अप्रामाण्यज्ञानानास्कन्दित-निश्चवृत्तित्वविशिष्ट यद्रूपावच्छिन्नविषयता भवति प्रकृतानुमिति प्रतिबन्धकतानतिरिक्तवृत्ति: तद्रूपावच्छिन्नत्वं समुदितलक्षणार्थ:। तथाच

अनाहार्याप्रामाण्यज्ञानानास्कन्दित वह्न्यभाववद् ह्रदत्वावच्छिन्नविषयता शालि वह्न्यभाववान् ह्रद इत्याकारक निश्चयवृत्तित्वविशिष्ट वह्न्यभाववद् ह्रदत्वावच्छिन्न विषयतायाः संशयाहार्याप्रामाण्यज्ञानादौ अभावेन भवति च तादृश विषयता ह्रदो वह्निमान् इत्यादि समूहालम्बनानुमितित्व व्यापक प्रतिबध्यता निरूपित प्रतिबन्धकतानतिरिक्तवृत्तिरिति तद्रूपावच्छिन्नत्वं वह्न्यभाववद् ह्रदरूपबाधे सत्वाल्लक्षणसंगतिः। अनयैव दिशा सर्वत्र लक्षणसमन्वयसम्भवेन नासम्भव इति।

इदमुपलक्षणम्, अव्याप्यवृत्तित्वभ्रमानास्कन्दितत्वमपि विशेषणं देयमतो न वह्न्यभाववद् ह्रदादौ असंभवः। भ्रमत्वनिवेशात् वृक्षः कपि संयोगवान् इत्यत्र कपिसंयोगाभाववद् वृक्षे नातिप्रसंगः।

अत्रानतिरिक्तवृत्तित्वं यदि तच्छून्यावृत्तित्वं अर्थात् प्रकृतानुमिति प्रतिबन्धकत्वाभाववदवृत्तित्वरूपं तदा यद्रपावच्छिन्नविषयता प्रकृतानुमितित्व व्यापक प्रतिबन्ध्यतानिरूपित प्रतिबन्धकत्वाभाववदवृत्तिः तद्रूपावच्छिन्नत्वरूपार्थे पुनरसम्भवः, वह्न्यभावविशिष्टह्रदत्वावच्छिन्न विषयतायाः शुद्धह्रदत्वा– वच्छिन्नविषयतातो "विशिष्टं शुद्धान्नातिरिच्यते" इति नियमेनाभिन्नता ह्रदो वह्निमानित्याद्यनुमिति प्रतिबन्धकत्वाभाववति शुद्ध ह्रद इति ज्ञाने शुद्ध ह्रद विषयतातः अभिन्नायाः वह्न्यभावविशिष्टह्रदविषयतायाः वर्तमानत्वेनातिरिक्त वृत्तित्वाभावात्। अतोऽनतिरिक्तवृत्तित्वं स्वाव्यापकतत्कत्वरूपमेव, तथा चाप्रामाण्यानाहार्यज्ञानानास्कन्दित निश्चयवृत्तित्वविशिष्ट यद्रूपावच्छिन्न विषयताव्यापिका भवति प्रकृतानुमितित्व व्यापक प्रतिबध्यतानिरूपित प्रतिबन्धकता तद्रूपावच्छिन्नत्वमिति पर्यवसितलक्षणेऽनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चय वृत्तित्वविशिष्टवह्न्यभाववद् ह्रदत्वावच्छिन्न विषयता व्यापकत्वस्य निरूक्तानुमितिप्रतिबन्धकतायां सत्वान्नासम्भवः।



# सव्यभिचारस्य सामान्यस्वरूपः

पंचविधहेत्वाभासानां मध्ये सव्यभिचारस्य प्रथमत्वेन व्यपदेशः मुनिना कृतः। तस्य च ज्ञानं लक्षणाधीनमतः सव्यभिचारस्य लक्षणमिदानीं निरूप्यते "साध्यसंशयजनककोटिद्वयोपस्थापक पक्षधर्मता ज्ञानविषयत्वे सति हेत्वभिमतः सः" यत्किचिंद् विशेष्यकविरूद्धसाध्यसाध्याभावप्रकारकज्ञानात्मक– साध्यसंशयजनकीभूता या साध्यसाध्याभावात्मिकाकोटिद्वयोपस्थितिः तज्जनकपक्षधर्मताज्ञानीय प्रकारताश्रयत्वं सव्यभिचारत्वम्।

धूमधूमाभावसहचरित वह्निमान् पर्वत इत्याकारक पक्षधर्मताज्ञानमादायतादृशज्ञानजन्या या कोटिद्वयोपस्थितिः पर्वतो धूमवान् इत्याकारिका पर्वतो धूमाभाववानित्याकारिका च तज्जन्यतायाः पर्वतो धूमवान् न वेत्याकारक संशये विद्यमानतया तादृशसंशयजनककोटिद्वयोपस्थापकपक्षधर्मताज्ञानीय प्रकारताश्रयत्वस्य वह्नौ सत्वात् साधारणे लक्षणसमन्वयः।

एवं पर्वतो वह्निमान् गगनादित्यादौ गगनरूपासाधारणे वह्निवह्न्यभाव व्यावृत्त गगनवान् पर्वत इत्याकारकज्ञानमादाय लक्षणसमन्वयः। उक्तज्ञानस्यापि वह्निवह्न्यभाववद्व्यावृत्तत्वविशिष्ट गगनप्रकारकज्ञानरूपतया तज्जन्य वह्निवह्न्यभावोपस्थित्योः पर्वतो वह्निमान् न वेत्याकारक संशयजनकतया तादृश संशयजनकतादृशोपस्थितिद्वयजनकज्ञानीय प्रकारतावच्छेदकताश्रयधर्मवत्वस्य गगने सत्वात्।

यदि तु निश्चितसाध्यतदभाववत् व्यावृत्तत्वमेवासाधारण्यं तदा शब्दः अनित्य शब्दत्वात् इत्यत्र यदा शब्दे अनित्यत्वस्य संशयः तदा निरूक्तशब्दत्वहेतोरपि लक्ष्यतया तत्र निश्चित अनित्यत्ववत् घटनिश्चितानित्यत्वाभाववत् गगन व्यावृत्तत्वविशिष्ट शब्दत्ववान् शब्दारित्याकारक ज्ञानमादाय शब्दत्वेपि लक्षणसमन्वयः। एवं सर्वमनित्यं प्रमेयत्वादित्यादौ मेयत्वरूपानुसंहारिसर्वत्रैव पक्षे साध्यसंशयसत्वे अनित्यत्वानित्यत्वाभावसहचरित

प्रमेयत्ववत् सर्वमित्याकारकनिश्चयस्य साध्यसाध्याभावोपस्थापकस्य यदि अप्रसिद्धिस्तदा पक्षैकदेशे यदा साध्यस्य तदभावस्य निश्चयो विद्यते तत्कालीनाऽनित्यत्वतदभाववत् वृत्तित्वविशिष्टमेयत्ववत् सर्वमित्याकारक निश्चयी प्रकारताच्छेदकतापर्याप्त्यधिकरण अनित्यत्वतदभावसहचरितत्वमेयत्वत्व धर्मवत्वस्य हेतौ विद्यमानत्वात् भवतिलक्षणसमन्वयः।

यद्यपि वह्निमान् धूमादित्यादावपि सद्धेतौ साध्याभाववत्वभ्रममादाय साध्यसंशयजनककोटिद्वयोपस्थापकपक्षधर्मता ज्ञानपदेन वह्नि वह्न्यभावसह–चरितधूमवान् पर्वतः इत्याकारकधूमवानज्ञानमपि धर्तुं शक्यते तथापि तादृशज्ञानीयप्रकारतावच्छेदकता पर्याप्त्याधिकरणीभूत धर्मान्तर्गत वह्न्यभाववद् वृत्तित्वस्य वह्नौ विरहान्नातिव्याप्त्यवसरः।

अत्र लक्षणे मणिग्रन्थेन साध्यसंशयजनकत्वं कोटिद्वयोपस्थापकत्वञ्च पक्षधर्मता ज्ञाने एव विशेषणतया भासते एवं सति अयं नित्यः ज्ञानात् इत्यत्र ज्ञानात्मकं सद्धेतावतिव्याप्तिः। निश्यत्वतदभावविषयकज्ञानवानयमित्याकारक ज्ञानस्य नित्यत्वतदभावोपस्थितिं प्रतिधर्मिज्ञानविधया साध्यसंशयं प्रत्यपि च जनकत्वात् तादृशज्ञानीय प्रकारताश्रयत्वस्य ज्ञानहेतौ सत्वात्। यद्यपि प्रकृतसाध्यसंशयधर्मितावच्छेदकतात्वपर्याप्त्यधिकरणधर्मावच्छिन्नविशेष्यता निरूपितयद्रूपावच्छिन्नप्रकारताशालिज्ञानं तादृश संशयजनकं तद्रूपवत्वं सव्यभिचारत्वमित्येवं निवेशनैव अयं नित्यो ज्ञानादित्यत्र नातिव्याप्तिः। नित्यत्वतदभावविषयकज्ञानवानयमित्याकारक ज्ञानीय इदन्त्वत्रावच्छिन्न–विशेष्यतानिरूपिता नित्यत्वतदभावविषयकज्ञानत्वाच्छिन्न प्रकारतायाः नित्यत्वतदभाव विषयकज्ञानवानयं नित्यो न वेत्याकारक प्रकृतिसाध्यसंशय–धर्मितावच्छेदकता पर्याप्त्यधिकरणीभूत नित्यत्वतदभावविषयकज्ञान इदन्त्वरूप–धर्मद्वयावच्छिन्न विशेष्यताकत्वविरहेण यद्रूपपदेन नित्यत्वतदभावविषयक ज्ञानत्वस्य धर्तुमशक्यत्वात्।

तथापि कोटिद्वयोपस्थितिजनकत्वस्य पक्षधर्मताज्ञानाविशेषणत्वे पूरोवर्ति

पर्वतो वह्निमान् धूमादित्यादौ पुरोवर्तित्वादिरूप धर्मितावच्छेदके अतिव्याप्तिः। पर्वतः पुरोवर्तितावान् इत्याकारकज्ञानस्य पुरावर्तिपर्वतो वह्निमान् न वेत्याकारक संशयंप्रति धर्मितावच्छेदकप्रकारकज्ञानमुद्रया जनकतया तदीयप्रकारताश्रयत्वस्य पुरोवर्तित्वे विद्यमानत्वात्। अतः कोटिद्वयोपस्थितिजनकत्वेन पक्षधर्मताज्ञानं विशेषणीयम्।

इत्थञ्च पुरोवर्तितावान् पर्वतः इत्याकारकज्ञानस्य कोटिद्वयोपस्थित्य–जनकतया न पुरोवर्तित्वेतिव्याप्तिः। इत्येवं कोटिद्वयोपस्थितिजनकत्वविशेषणस्य सार्थक्यं भवति। परन्तु उक्त रीत्या लक्षणनिर्वचने न धर्मितावच्छेदके अतिव्याप्तिः भवितुमर्हति। तथाहि पुरोवर्तितावान् पर्वत इत्याकारक ज्ञानीयमात्रावच्छिन्न विशेष्यता निरूपित पुरोवर्तित्व निष्ठप्रकारतायाः पुरोवर्तिपर्वतो वह्निमान् न वेत्याकारक संशयधर्मितावच्छेदकपुरोवर्तित्वपर्वतत्वरूपधर्मद्वयावच्छिन्नविशेष्यताकत्वाभावेन यद्रूपपदेन पूरोवर्तितात्वस्य धर्तुमशक्यतया धर्मितावच्छदेके अनिव्याप्तेरेवप्रसक्त्या पक्षधर्मताज्ञानविशेषणस्य कोटिद्वयोपस्थापकस्य वैयर्थ्य प्रसज्येत। अतः न पूर्वोक्तरीत्या नित्यत्वसाध्यक ज्ञानहेतावतिव्याप्तिः परिहर्तु शक्या।

न च नित्यत्वतदभावविषयकज्ञानवानहमित्याकारक ज्ञानस्य कोटिद्वयोपस्थापकत्वेन तादृशकोटिद्वयोपस्थितेश्च विशेषणज्ञानमुद्रया अयं नित्यो न वेत्याकारकसाध्यसंशयं प्रति जनकतया कोटिद्वयोपस्थितिद्वारासाध्यसंशयजनकत्वं नित्यत्वतदभावविषयकज्ञानवानहं इत्याकारक ज्ञानेऽपि असत्येव तादृशज्ञानीयप्रकारताश्रयत्वस्य ज्ञानहेतौ सत्वेनातिव्याप्तिर्दुर्धरैवेति वाच्यम्, लक्षणे साध्यसंशयत्वावच्छिन्न जन्यतानिरूपित जनकताया एव प्रविष्टत्वात्। निरूक्तज्ञानाधीनकोटिद्वयोपस्थितेः या जनकता सा न साध्यसंशयत्वावच्छिन्ना जन्यता निरूपिता किन्तु साध्यसंशय निष्ठ विशिष्टबुद्धित्वावच्छिन्न जन्यता निरूपितैव इति नातिप्रसंगः।

संशयं प्रति साधारणधर्मवद्धर्मिज्ञानजन्यकोटि–उपस्थितित्वेन असाधारणादिधर्मवद् धर्मिज्ञानजन्यकोट्युपस्थितित्वेन च

हेतुत्वस्यावश्यकत्वादसाधारणादिधर्मवद् धर्मिज्ञानजन्यकोट्युपस्थिति–विरहदशायामुत्पद्यमानेकेवलसाधारणधर्मवद् धर्मिज्ञानजन्यकोट्युपुस्थितिजन्ये संशये वर्तमानस्यासाधारणादि धर्मवदधर्मिज्ञानजन्यकोट्युपस्थितिरूपकारणा–भाववद्वृत्तित्वरूपव्यतिरेकव्यभिचारस्यवारणाय साधारणादि धर्मवद्धर्मिज्ञानजन्यकोट्युपस्थित्यव्यवहितोत्तरजायमान संशयं प्रत्येव तादृशोपस्थितेर्हेतुत्वं वाच्यम्,एवञ्च तादृशोपस्थित्यव्यवहितोत्तरं संशयभिन्नस्यानुत्पादात् प्रयोजनविरहेण संशयत्वमनिवेश्य तादृशोपस्थित्यव्यवहितोत्तरत्वावच्छिन्नं प्रत्येव तादृशोपस्थितित्वेन जनकत्वं विवक्षणीयं, तथा च संशयत्वावच्छिन्नजन्यतानिरूपितजनकतावदुपस्थितिपदेन साधारणादिधर्मवद्धमिज्ञानजन्यकोट्युपस्थितेरूपादातुमशक्यतया कुत्रापि साध्यसंशयत्वावच्छिन्नजन्यताघटितलक्षणसमन्वयांऽसम्भवादसंभवः स्यात्, तदा साध्य संशयत्वावच्छिन्नत्वं परित्यज्य साध्यसंशयत्वन्यूनवृत्तित्वमेव देयं, विशेषणज्ञानादि जन्यता च न तन्न्यूनवृत्तिरिति नातिप्रसंगः।

यादृशस्थले प्रथमं नित्यत्वतदभाव सहचरित प्रमेयत्ववानयमित्येकं ज्ञानं ततो नित्यत्वतदभावविषयकज्ञानर्वाश्चायमित्यपरं ज्ञानं तादृशज्ञानद्वयाच्चैकैव नित्यत्वतदभावविषयिणी उपस्थितिरूत्पद्यते न तु तादृशी उपस्थिति द्वयी, तादृश स्थले नित्यत्वसाध्यकज्ञानहेतावतिव्याप्तिर्दुर्वारैव निरूक्तोपस्थितेः नित्यत्वतदभावसहचरित प्रमेयत्ववान् इत्याकारक साधारणधर्मवद्धर्मिज्ञानजन्यत्वेन संशयजनकत्वस्याक्षततया संशयजनकतादृशोपस्थितिजनकीभूतं यन्नित्यत्वतद्भावविषयकज्ञानवानयमित्याकारकज्ञानात्मकं पक्षधर्मताज्ञानं तद्विषयत्वस्य निरूक्तज्ञानहेतौ सत्वात्।

यद्यपि साधारणधर्मवद्धर्मिज्ञानादिमात्रजन्यकोटिद्वयोपस्थितित्वेन संशयजनकत्व विवक्षणे नेयमतिव्याप्तिः निरूक्तज्ञानंद्वयाधीनैकोपस्थितेस्तादृश–ज्ञानमात्राजन्यत्वेन संशयाजनकत्वात्। न चैवम् तादृशज्ञानद्वयाधीनैकोपस्थितिकाले नित्यत्वसाध्यकप्रमेयत्वरूपसाधारणहेतावव्याप्तिः निरूक्तोपस्थितेः।

साधारणज्ञानमात्राधीनत्वेन संशयाजनकत्वादिति वाच्यम्। कालान्तरीयकेवल-नित्यत्वतदभावसहचरित प्रमेयत्वज्ञानमात्राधीनकोट्युपस्थितिजनकज्ञानविषयत्वोप-लक्षितत्वस्य निरूक्तज्ञानद्वयकालेऽपि प्रमेयत्वे सत्वेन तदानींलक्षणसमन्वय-सम्भवेना व्याप्तिविरहादित्युच्यते तथापि साधारणज्ञानमात्रजन्यत्व-निवेशेऽसाधारणज्ञानजन्यकोट्युपस्थितेः संशयजनकत्वानुपपत्तिः। असाधारणज्ञानमात्रजन्यत्वानिवेशे च साधारणज्ञानाधीनकोट्यस्थितेः संशयजनकत्वानुयपत्तिः, तादृश ज्ञानान्यतममात्रजन्यत्वनिवेशे तु अन्यतमत्वस्य भेदगर्भतया विनिगमनाविरहेण विशेष्यविशेषणभेदेन कार्यकारणभावस्यानन्त्यापत्तिः स्यात्।

तन्निष्ठान्यथासिद्ध्यनिरूपकत्वे सति तद्व्यवहितोत्तरत्वरूपस्य तज्जन्यत्वस्य तद्घटकाव्यवहितोत्तरत्वापेक्षया गुरूत्वात् संशयजनकतावच्छेदकगर्भे. प्रकारतया संसर्गतया च जन्यत्वप्रवेशो न सम्भवति अत्राव्यवहितोत्तरत्वं तृतीयक्षणसाधारणं स्वध्वंसाधिकरण क्षणध्वंसानधिकरणत्वे सति ध्वंसाधिकरणक्षण-ध्वंसाधिकरणत्वरूपं न तु स्वाधिकरणक्षणध्वंसानधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरण क्षणध्वंसाधिकरणत्वरूपं द्वितीयक्षणमात्रवृत्ति ग्राह्यं तथा सति यादृशस्थलविशेषे निश्चित नित्यत्वतदभाववद् व्यावृत्त शब्दत्ववान् शब्द इत्याकारिका साधारणधर्मज्ञान तृतीयक्षणे कोट्युपस्थितिर्जनिता तादृशस्थले निरूक्ताव्यवहितोत्तरत्वसम्बन्धेनासाधारणधर्मज्ञानविशिष्टत्वस्य कोट्युपस्थितावसम्भवेन तादृशज्ञानविशिष्ट कोट्युपस्थितित्वावच्छिन्न संशयजनकत्वाप्रसिद्ध्या पक्षे अनित्यत्वसंदेहदशायां अनित्यत्वसाध्यक-शब्दत्वरूपासाधारणहेतावव्याप्त्यापत्तेः।

तथाच साध्यसंशयत्वन्यूनवृत्तिजन्यतानिरूपित जनकतावच्छेदकावच्छिन्नजन्यता निरूपित जनकतावत् पक्षधर्मताज्ञानविषयत्वस्यैव सव्यभिचारत्वस्वरूपतया न निरूक्तज्ञानद्वयाधीनैकोपस्थितिमादाय नित्यत्वसाध्यकज्ञानहेतावतिव्याप्तिः। संशयजनकतावच्छेदकीभूतस्या-

ऽव्यवहितोत्तरत्व सम्बन्धेन नित्यत्वतदभावसहचरित प्रमेयत्वज्ञानविशिष्ट-कोट्युपस्थितित्वस्य नित्यत्वतदभावविषयक ज्ञानप्रकारकज्ञानजन्यतानवच्छेदकतया तदवच्छिन्नजन्यतानिरूपित जनकत्वस्य नित्यत्वतदभावविषयकज्ञानप्रकारकज्ञाने विरहादिति भाव:। वस्तुतोऽव्यवहितोत्तरत्वसम्बन्धे यद्रूपावच्छिन्नप्रकारता-शालिज्ञानविशिष्टकोट्युपस्थितित्वंतादृशज्ञानजन्यतावच्छेदकीभूतं साध्यसंशयत्व-न्यूनवृत्तिजन्यतानिरूपितजनकताया: अवच्छेदकं भवति तद्रूपवत्वमेव फलितं, नित्यत्वतदभावविषयकत्वावच्छिन्नज्ञानप्रकारक ज्ञानविशिष्टकोट्युपस्थितित्वस्य तादृशज्ञानजन्यतावच्छेदकस्य संशयजनकतानवच्छेदकतया यद्रूपपदेन तादृश ज्ञानत्वस्योपादानासम्भवान्न तादृशाज्ञानद्वयाधीनैकोपस्थितिमादाय नित्यत्वसाध्यकज्ञानहेतावतिव्याप्ति:।

अतएव नित्यत्वतदभावविष्यकज्ञानवानयम् नित्यत्वतदभाव सहचरितप्रमेयवत्वांश्चायमित्याकारकसमूहालम्बन ज्ञानाधीनैकोपस्थितिमादायापि न तत्रातिव्याप्ति:, नित्यत्वतदभावविषयकज्ञानत्वावच्छिन्नप्रकारकज्ञान-विशिष्टकोट्युपस्थितित्वस्य संशयजनकतानवच्छेदकत्वात् इति तु समीचीनम्।

साधारण्यादिविशिष्टधर्मवत्ताज्ञानजन्यता वि[illegible]ष्टकोट्युपस्थितित्वं यदि संशयजकतावच्छेदकं तदा तादृशोपस्थितित्वं तादृशज्ञानजन्यतावच्छेदकमपि वाच्यम्, तादृशज्ञानजन्यतावच्छेदकधर्म एव संशयजनकतावच्छेदक इत्यस्यैव पूर्वमभिहितत्वात् एवंच स्वं यदि स्वावच्छेदकं स्यात् स्वभिन्नं स्यादित्याकारकापत्तिरूपात्माश्रयभयेन साधारण्यादिविशिष्टधर्मवत्ता ज्ञानजन्यताया: तादृशज्ञानजन्यतावच्छेदकत्वऽसम्भवेन सर्वत्रासम्भव: स्यात्। संशय जनकतावच्छेदकी भूतं यत् साधारण्यादि विशिष्ट धर्मवत्ता ज्ञान जन्यता विशिष्ट कोट्युपस्थितित्वं तदवच्छिन्नाया: तादृशज्ञानजन्यताया: अप्रसिद्धेरतो-ऽव्यवहितोत्तरत्वसम्बन्धेन तादृशज्ञानविशिष्टकोट्युपस्थितित्वरूपतादृश-ज्ञानजन्यतावच्छेदकधर्म एव संशय जनकतावच्छेदको वाच्यं।

ननु संशयजनकतावच्छेदकावच्छिन्नत्वं यदि संशयजनकतावच्छेदक-

निष्ठावच्छेदकतात्वं तदा साधारण्यादिविशिष्टधर्मवत्ताज्ञान विशिष्टकोट्युपस्थितित्वस्य संशयजनकतावच्छेदकत्वेऽपिनित्यत्वसाध्यक–ज्ञानहेतावतिव्याप्तिः दुर्वारैव नितयत्वतदभावविषयक ज्ञानवानयमित्याकारकज्ञान–स्याव्यवहितोत्तरत्वसम्बन्धेन ताद शज्ञानविशिष्ट कोट्युपस्थितित्वावच्छिन्नं प्रति जनकवया संशयजनकतावच्छेदककेवलोपस्थितित्वरूपज्ञानत्वस्यापि तज्ज्ञानजन्यतावच्छेदक घटकत्वेन तादृशकेवलोपस्थितित्वनिष्ठावच्छेदकताकजन्यता निरूपित जनकतावन्नित्यत्वतदभाव– विषयकज्ञानप्रकारक ज्ञानविषयतायाः ज्ञानहेतौसत्वात्।

तथा च साध्यसंशयजनकतावच्छेदकीभूतसाधारणादिधर्मवद्धर्मिज्ञान–वैशिष्ट्यकोट्युपस्थितित्वरूपधर्मद्वयनिष्ठावच्छेदकताकत्वस्य नित्यत्वतदभाव–विषयकज्ञानवानयम् इत्याकारकज्ञाननिरूपितायां जन्यतायामभावान्न तादृश–ज्ञानजन्यतामादायनित्यत्वसाध्यकज्ञानहेतावतिव्याप्तिः।

तत्र अयमाशयः– इतरवारकपर्याप्तिनिवेशे स्वावच्छेदकतात्वावच्छिन्न प्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व सम्बन्धेन संशयजनकता–वच्छेदकतात्वावच्छिन्न प्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तियज्जन्यत्वं तन्निरूपित जनकतावत् पक्षधर्मताज्ञानविषयत्वस्यैव सव्यभिचारत्वस्वरूपताया पर्यवसितायां भवेदेवासम्भवः। साधारण्यादिविशिष्टधर्मवद्धर्मिज्ञान–वैशिष्ट्यमात्रावच्छिन्नायाः तादृशज्ञानतन्यतायाः स्वावच्छेदकतात्वावच्छिन्न प्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व सम्बधेन तादृशज्ञानवैशिष्ट्य गतैकत्वादिमात्र निष्ठत्वेन संशयजनकतावच्छेदकतात्वावच्छिन्न प्रतियोगिताक पर्याप्त्यनुयोगितावच्छेदक साधारण्यादिविशिष्टधेर्मवद्धर्मिज्ञानवैशिष्ट्य–कोट्युपस्थितित्वगत द्वित्वादाववर्त्तमानतया तादृश सम्बन्धेन तादृश द्वित्व प्रर्याप्तिकावच्छेदकरूपवृत्तिजन्यता पदेन साधारणादिज्ञानजन्यतायाः उपादातुमशयत्वादतः इतरवारिका पर्याप्तिः न निवेशनीया तथा सति स्वावच्छेदकता प्रतियोगिक पर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन संशयजनकता–

वच्छेदकतात्वावच्छिन्न प्रतियोगिताक पर्याप्तुयोगितावच्छेदक रूपवृत्तिजन्यता घटितस्यैव लक्षणार्थताया आवश्यकतया नासम्भवः सम्भवति, साधारणादिज्ञानवैशिष्ट्यकोऽ्युपस्थितित्वद्वयनिष्ठावच्छेदकताकपर्याप्तेरपि साधारण्यदिविशिष्टधर्मवद् धर्मिज्ञानजन्यतावच्देदकता प्रतियोगिक पर्याप्तित्वेन तादृश ज्ञानवैशिष्ट्यकोट्युपस्थितित्वगतद्वित्वे वर्तमानस्य स्वावच्छेदकता प्रतियोगिकपर्याप्त्यनुयोगितावछेदकत्वस्य संशयजनकतावच्छेदकतात्वावच्छिन्न प्रतियोगिताक पर्याप्त्यनुयोगितावच्छेदकसाधारण्यादि विशिष्ट धर्मवत्ताज्ञानवैशिष्ट्यकोट्युपस्थितित्वगतद्वित्वेऽपि वर्तमानतया तादृशद्वित्ववृत्तिजन्यतापदेन साधारण्यादिविशिष्ट धर्मवत्ताज्ञानजन्यतायाः धतुं शक्यत्वात्।

न च साध्यसंशयजनकोपस्थितिजनकंपक्षधर्मता ज्ञानत्वे सति हेत्वभिमतः सः इत्येवं लक्षणं समीचीनम्। कोटिद्वयविषयकत्वमुपस्थितौ उपादानं व्यर्थम् इति वाच्यम्।

उपस्थितौ कोटिद्वयविषयकत्वानुपादाने यत्र प्रथमं वह्न्यभावसहचरित– धूमवानिति ज्ञानं ततो बह्निसहचरितधूमवान् इत्याकारक ज्ञानं तदनन्तरेपूर्वज्ञानजन्या वह्नियभावोपस्थितिततो द्वितीयज्ञानजन्यावह्न्युपस्थिति तत्र निरूक्तवह्न्युपस्थितेरपि तादृशवह्न्यभावोपस्थितिसहकारेण साध्यसंशयजनकतया संशयजनकोपस्थितिपदेन वह्न्युपस्थिति मात्रमादायतज्जनकीभूतं यत् वह्निसहचिरत धूमवान् इति ज्ञानं तद्विषयत्वस्य धुमे सत्वात् वह्निमान् धूमादित्यादौ वह्निव्याप्ये धुमेऽतिव्याप्तिः। एवं यत्र प्रथमं वह्निसहचरित जलत्ववान् इति ज्ञानं तो वह्नयभावसहचरित जलत्ववानिति ज्ञांन तदनन्तरं प्रथमज्ञानाधीनावह्न्युपस्थिति ततो द्वितीयज्ञानाधीना वह्नयभावोपस्थितिः तत्र निरूक्तवह्नयभकेपस्थितेरपि तादृशवह्न्युपस्थिति सहकृतत्वेन साध्यसंशयजनकतया संशयजनकोपस्थितिपदेन वह्न्यभावोपस्थितिमात्रमादाय तज्जनकीभूतं यत् वह्न्यभावसहचरितजलत्ववानयं इति ज्ञानं तद्विषयत्वस्य जलत्वे सत्वात्, वह्निमान् जलत्वादित्यादौ वह्निविरूद्धे जलत्वे चातिव्याप्तिः।

अतः कोटि द्वयविषयकत्वेनोपस्थितिरवश्यं विवक्षणीया तथा सति न तत्र तत्रातिव्याप्तिः।

तथाहि—संशयं प्रति अव्यवहितोत्तरत्वसम्बन्धेन तत्कोटिसहचरित—धर्मवत्ताज्ञानजन्यतदुपस्थितित्वेन, तदभावकोटिसहचरितधर्मवत्ताज्ञानजन्यतद—भावोपस्थितित्वे च पृथगेव तत्तत्साहचर्यविषयतामन्तर्भाव्यहेतुता कल्प्यते। एवं तत्तत्कोट्युपस्थितिं प्रत्यपि तथैवं तत्तत् कोटिसहचरित धर्मवत्ताज्ञानत्वेन हेतुता। तथा च साधारणधर्मवत्ताज्ञानं प्रत्येककोटिसहचरित धर्मवत्ताज्ञानमेव परस्परज्ञानजन्यकोट्युपस्थितौ सहकारित्वोपगमाच्च नैकज्ञानाधीनकोट्युपस्थितितः संशयापत्तिः।

## प्रतिबन्धकताघटितपूर्वपक्षीय सव्यभिचारद्वितीयलक्षणम्—

पक्षवृत्तित्वे सति अनुमितिविरोधिसम्बन्धाव्यावृत्तिरनैकान्तिकः"

विरोधित्वंविरोधिज्ञानविषयत्वम्, तेन साधारण्यादि ज्ञानस्यैवानुमिति—प्रतिबन्धकतयातद्विषयीभूतसाधारण्यादि सम्बन्धस्यातथात्वेन—

मूलोक्तलक्षणघटकानुमिति विरोधिपदस्यानुमितिप्रतिबन्धकार्थकत्वे तादृश प्रतिबन्धकत्वस्य साधारण्यादौ बाधात्निरूक्तलक्षणार्थस्यासम्भावादसंगतिः न। अव्यावृत्तिपदमत्यन्तायोगव्यवच्छेदार्थकम्।

तथा च स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्वसम्बन्धेन स्वप्रतियोगिता—वच्छेदकावच्छिन्नासम्बन्धिवृत्तित्वविशिष्टो योऽनुमिति प्रतिबन्धकतावच्छेदक—विषयितानिरूपकतावच्छेदक धर्मावच्छिन्नप्रतियोगिताकाभावः स अत्यन्तायोगः तादृशाभावाभाववत्वं तद्व्यवच्छेदः। तेन न वह्न्यभाववद् वृत्तित्व विशिष्टप्रमेयाभावप्रतियोगित्वाश्रयासम्बन्धित्वाश्रयासम्बन्धित्वस्याऽप्रसिद्धावपि वह्निसाध्यक, प्रमेयहेतौ अव्याप्तिः। न वा धूमसाध्यक वह्निहेतुकस्थले धूमाभाववद्वृत्तित्वविशिष्टवह्नेः कालिकादिसम्बन्धेनासमबन्धिगगनादिवृत्तित्वविशिष्ट तादृशाभावाभाववत्वस्य रासभादौ सत्वेऽपि तत्रातिव्याप्तिः।

यदा तु रासभादौ द्रव्ये महानसवृत्तित्वं वर्तते तदानीं रासभादौ वह्न्यभाववदवृत्तित्वस्य सत्वेन वह्न्यभाववद्वृत्तित्वस्य तत्रासत्वेऽपि कालान्तरीय वह्न्यभाववद्वृत्तित्वविशिष्टरासभादेः स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्व–सम्बन्धेनासम्बन्धित्वस्य रासभादावसत्वात् तादृशरासभाद्यसम्बन्धि धूमादिनिष्ठस्य तादृशरासभाद्यभास्याभाववत्तायाः रासभादौ महानसादिवृत्तितादशायामपि वर्तमानतया तत्रवह्निसाध्यकरासभादौ व्यभिचारिणि लक्षणसमन्वयः।

तथाच प्रकृतपक्षधर्मिकप्रकृतसाध्यप्रकारक प्रकृतहेतुप्रकारकलौकिक–सन्निकर्षाद्यजन्यग्रहत्वव्यापकप्रतिबध्यतानिरूपित प्रतिबन्धकतानतिरिक्त–वृत्तिविषयितानिरूपकतावच्छेदकतापर्याप्त्यनधिकरणत्वे सति यद्रूपावच्छिन्न–विषयकनिश्चयत्वव्यापकं प्रकृतपक्षधर्मिकसाध्यप्रकारकसाध्यान्वयव्याप्ति–विशिष्टहेतुप्रकारकसाध्यव्यतिरेकव्याप्तिविशिष्टहेतुप्रकारकानुमितित्वव्यापक–प्रतिबध्यतानिरूपित प्रतिबन्धकत्वं तद्रूपावच्छिन्नोऽनैकान्तिकःदोषः, प्रतियोगि–व्यधिकरणतादृश दोषाभावाभाववत्वं सव्यभिचारत्वम्। भवति, हि धूमवान् वह्नेरित्यादौ वह्निमन्निष्ठधूमाभावादिरूपव्यभिचारे लक्षणसमन्वयः। तादृश–धूमाभावत्वादेः पक्षः साध्यवान् हेतुमान् इत्याकारकग्रहप्रतिबन्धकतानतिरिक्तवृत्ति विषयितानिरूपकतावच्छेदकतापर्याप्त्यनधिकरणत्वेन सत्यन्तदलाक्रान्ततया अन्वयव्याप्तिविषयकपक्षः साध्यवान् साध्यव्याप्य हेतुमानित्याकारकानुमिति प्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकत्वेन विशेष्यदलाक्रान्ततया च यद्रूपपदेन तस्य धर्तु शक्यतवात्।

वह्निमान् गगनादित्यादौ गगननिष्ठ वह्नितदभाववद्वृत्तित्वाभावत्वस्यापि पक्षे साध्यहेतुवैशिष्ट्यावगाहिग्रह प्रतिबन्धकतानतिरिक्तवृत्तिविषयिता–निरूपकतानवच्छेदकत्वेन सत्यन्तदलाक्रान्ततया साध्यसामानाधिकरण्यघटित–व्याप्तिविषयकसमूहालम्बनानुमितिप्रतिबन्धकतावच्छेदकविणयिता–निरूपकत्तावच्छेदकत्वेन विशेष्यदलाक्रान्ततया च यद्रूपपदेन गगन वृत्तित्वविशिष्टवह्नितदभाववद्वृमत्तिवाभावत्वमादाय गगननिष्ठ साध्यतदभाववद्

व्यावृत्तत्वरूपासाधारण्येऽपिलक्षणसमन्वयः। एवं सर्वमनित्यं मेयत्वादित्यादौ मेयत्वनिष्ठ अनित्यत्वव्यापकीभूताभावाप्रतियोगित्वरूपानुपसंहारित्वेऽपि लक्षण समन्वयः।

एवं पक्षातिरिक्तसाध्यवन्मात्रवृत्यन्यत्वे सति पक्षातिरिक्त साध्याभाववान्मात्रवृत्तिभिन्नत्वम् सव्यभिचारत्वमित्ययपि न अनुपसंहार्यसंग्रहापत्तेः। वा पक्षवृत्तित्वे विरूद्धान्यत्वे च सत्यनुमित्यौपयिक सम्बन्धशून्यत्वम् इत्यपि न। व्यर्थविशेषणत्वात्।

## सव्यभिचार सिद्धान्तलक्षणम्—

उभयकोट्युपस्थापकतावच्छेदकरूपवत्वं तत्वम् सव्यभिचारत्वम्।

पूर्वोक्तलक्षणानां साधारण्यस्यासाधारण्यस्य च संशायकता मते प्रथमलक्षणं व्याप्तिग्रहादिविरोधितमते च। विरोधित्वघटितलक्षणलक्ष्ये विरूद्धे संशयप्रयोजकस्य सपक्षवृत्तित्वघटितसाधारण्यस्य विपक्षव्यावृत्तत्वघटितसाधारण्यस्य च विरहेऽपि प्रथमलक्षणस्य नाव्याप्तिः प्रथलक्षणालक्ष्ये तत्र च विरोधिताघटितलक्षणस्य वा नातिव्यप्तिः परन्तु तज्ज्ञानस्यानुमित्यप्रतिबन्धकतया कोटिद्वयोपस्थापकतावच्छेदकत्वादिरूपानुगतधर्मावच्छिन्नानां तादृशरूपाद्यात्मक लक्षणानामनुमितिप्रतिबन्धकतायाम् विषयतयावच्छेदकत्वम् न घटते। तेषां दुष्टत्वव्यवहारनियामकोऽनुमितिप्रतिबन्धकतावच्छेदक धर्म एव विभाजक इति लियमे मानाभावात् इत्याशयेन सिद्धान्तलक्षणानामुत्थानं संजातम्।

न च पक्षधर्मतापदानुपादाने कोटिद्वयोपस्थितिजनकतावच्छेदकविषयितावच्छेदकधर्मवत्वमात्रं यदि सव्यभिचारत्वं तदा इदं द्वयणुकं नित्यमणुत्वादित्यादौ सद्धेतौ द्वयणुके अतिव्याप्तिंः, नित्यत्वतदभावसहचरिताणुत्ववदिदं द्वयणुकमित्याकारक ज्ञाननिष्ठायां नित्यत्वतदभावोपस्थितिजनकतायां द्वयगुणकविषयतायाः अप्यवच्छेदकत्वात्, अतः पूर्वोक्तरीत्या अत्रापि लक्षणेपक्षधर्मतापदोपादानमावश्यकम् इति वाच्यम्।

"सन्देहं प्रत्येव साधारण्यादि विशिष्ट धर्मवद्धर्मिज्ञानत्व न हेतुतातज्जनक कोटिद्वयोपस्थितिं प्रतितु तादृशधर्मज्ञानत्वमात्रेण" एवंच नित्यत्वतदभाववद्वृत्यणुत्वमित्याकारकज्ञानस्यैव कोट्युपस्थितौ जनकतया तज्जनकतावच्छेदिका तादृशवृत्तित्वप्रकारतानिरूपिताणुत्व विषयतैव न तु द्वयणुकविषयता, नित्यत्वादिमद्वृत्यणुत्ववद् द्वयणुकमित्याकारकज्ञानस्य कोट्यपुस्थितौ अहेतुत्वात्, संशयं प्रत्येव तादृशज्ञानस्य जनाकत्वात् इति पक्षधर्मतापद विहाय केवलोभयकोट्युपस्थिति जनकतावच्छेदक विषयतावच्छेदक–धर्मत्वस्य लक्षणार्थत्वेऽपि न तादृशस्थले द्व्यणुकेऽतिव्याप्तिः।

सिद्धान्तलक्षणवादिनांमते संशयं प्रतिसाधारणधर्मवद्धर्मिज्ञानत्वेन असाधारणधर्मवद्धर्मिज्ञानत्वेन च कारणताद्वयमेवं साधारणधर्मज्ञानजन्य कोट्युपस्थितित्वेन असाधारणधर्मज्ञानजन्यकोट्युपस्थितित्वेन च कारणता द्वयमिति चतुष्टयकारणताकल्पनापेक्षया केवल धर्मिज्ञानत्वेन संशयं प्रत्येककारणतायाः साधारणधर्मादिमद् धर्मिज्ञानजन्यकोट्युपस्थितित्वेन च संशयं प्रति द्विविध कारणताया एव कल्पनेन कारणतात्रयस्यैव कल्पनायतया पूर्वपक्षलक्षणवादिनां मतस्यैव लघुत्वात्। मैवम्।

कोट्युपस्थितिकारणतायां तत्तत्कोटिसहचरित धर्मवद्धर्मि विशेषविषयकज्ञानजन्यत्वनिवेश धर्मिभेदेन गुरूधर्मावच्छिन्नकारणतायाः आनन्त्यापत्तेस्तदपेक्षया धर्मिविशेषमनन्तर्भाव्य तत्तत्कोटिसहचरितधर्मज्ञानजन्य–कोट्युपस्थितित्वेन धर्मिविशेषमन्तर्भाव्य साधारणधर्मवद्धर्मिविशेषज्ञानत्वेन लघुशरीरेण हेतुत्वस्य कल्पयितुं युक्तत्वात्।

न च कोट्युपस्थितौ संशयजनकत्वाऽनिवेशे अयं नित्यः ज्ञानात् इत्यत्र नित्यत्वतदभावविषयकज्ञानवानयमित्याकारकज्ञानमादायसद्धेतौ ज्ञानेऽतिव्याप्तिः इति वाच्यम्। साध्यसंदेहजनिका या साध्योपस्थितिः तज्जनकतावच्छेदिका सती तथा–विधसाध्याभावोपस्थितिजनकतावच्छेदकीभूता या विषयता तदवच्छेदकतापर्याप्त्य–धिकरणधर्मवत्वम् सव्यभिचारत्वम् धारावाहीसन्देह इति मतेतु धर्मितावच्छेदक–

विशिष्टधर्मिणि यद्रूपविशिष्टज्ञानं साध्यसन्देहजनकं तद्रूपवत्वम् सव्यभिचारत्वम्।

निश्चितसाध्यतदभाववद्व्यावृत्तत्वं न संशयप्रयोजकं किन्तु साध्यतद–भावाभ्यां सहचरितत्वमिवतत्सहचरिताभावप्रतियोगित्वम्, व्याप्यविरूद्धयोस्तु तत्वेन निश्चितयोर्द्दर्शने विशेषदर्शनवशादेव संशय इति विभाव्य चिन्तामणिकारः लक्षणांन्तरमाह–

"विरूद्धान्यपक्षवृत्तित्वे सत्यनुमितिविरोधिसम्बन्धाव्यावृत्तिरनैकान्तिकः। तथाच यत्किंचित् धर्मावच्छिन्नविशेष्यकहेतुप्रकारक निश्चयकालीन यद्रूपावच्छिन्न विषयकनिश्चयत्व व्यापकं निरूक्तनिश्चयकालीनहेतु प्रकारकनिश्चय–धर्मितावच्छेदकावच्छिन्न विशेष्यताकानुमितित्वव्यापक प्रतिबध्यता निरूपित प्रतिबन्धकत्वम् तद्रूपवत्वम् .दोषत्वं स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्व सम्बन्धेन तादृश दोषवत्वं सव्यभिचारत्वम् इति निष्कृष्टार्थः।

भवति हि धूमवान् वह्नेरित्यादौ धूमाभाववद् वृत्तित्वविशिष्ट वह्नित्वरूप धर्ममादाय व्यभिचारे लक्षणसमन्वयः। वह्निमान् पर्वतः वह्निमन्महानसं–वेत्याकारकतादृशहेतुप्रकारक निश्चयकालीन धूमाभाववद् वृत्तित्व वह्नित्वावच्छिन्नविषयक निश्चयत्वव्यापकतायाः निरूक्तवह्नित्वावच्छिन्नविषयक निश्चयसमानकालीन तादृशवह्निप्रकारक निश्चय धर्मितावच्छेदकी–भूतपर्वतत्वाच्छिन्न विशेष्यक पर्वतो धूमवान् धूमव्याप्यो वह्निरित्याकारक समूहालम्बनानुमितित्वव्यापकप्रतिबध्यता निरूपित प्रतिबन्धकतायां सत्वेन धूमाभाववद् वृत्तित्वविशिष्टवह्नित्वस्ययद्रूपपदेन धर्तुं शक्यत्वात्।

एवं शब्दो नित्यःशब्दत्वात् इत्यादौ नित्यत्वव्यापकीभूताभाव–प्रतियोगित्वविशिष्ट शब्दत्वरूपासाधारण्येऽपि लक्षणसमन्वयः। सर्वमनित्यं प्रमेयत्वादित्यादावपि प्रमेयत्वान् घट इत्याद्याकारक हेतुमत्तानिश्चयकालीन नित्यत्वव्यापकीभूताभावाऽप्रतियोगित्वविशिष्टप्रमेयत्वत्वावच्छिन्नविषयकनिश्चयत्व–व्यापकतायाः निरूक्तविशिष्ट निश्चयकालीन प्रमेयत्वरूपहेतुप्रकारक निश्चय धर्मितावच्छेदकघटत्वाद्यवच्छिन्नधर्मिक घटोऽनित्यः अनित्यत्वान्वयव्याप्तिमत्

नित्यत्वव्यापकीभूताभावप्रतियोगित्वरूप साध्यव्यतिरेकव्याप्तिमच्च प्रमेयत्वमित्याकारक समूहालम्बनानुमितित्वव्यापकप्रतिबध्यता निरूपित प्रतिबन्धकतायां सत्वेन यद्रूपपेन नित्यत्वव्यापकीभूताभावाऽप्रतियोगित्वविशिष्ट प्रमेयत्वत्वधर्ममादाय नित्यत्वव्यापकीभूताभावाऽप्रतियोगित्वविशिष्ट प्रमेयत्वरूपानुपसंहारित्वे लक्षणसमन्वयः। अथवा "साध्यवन्मात्रवृत्यन्यत्वे सति साध्याभाववन्मात्रवृत्यन्यत्वम्" सव्यभिचारत्वम्।

## सव्यभिचारावान्तरभेदप्रदर्शनं तेषां स्वरूपपर्यालोचनम् च

चिन्तामणिकारेण गंगेशोपाध्यायेन सव्यभिचारसामान्यस्वरूपविमर्शात् पूर्वमेव सव्यभिचाराववान्तरभेदः प्रदर्शितः। यथा–"सव्यभिचारोऽपि त्रिविधः साधारणासाधारणानुपसंहारिभेदात्"

त्रिविधत्वं नाम उद्देश्यतावच्छेदकीभूत सव्यभिचारत्वसमनियतव–स्तुमदन्यसंख्यावान्। तादृशी च संख्या साधारणत्वाऽसाधारणत्वानुप–संहारित्वगतत्रित्वरूपा, तस्याश्च स्वाश्रयाश्रयत्वसम्बन्धेन साध्यत्वमवधेयम्।

तथा च सव्यभिचारः सव्यभिचारत्वसमनियतवस्तुमदन्यसंख्यावान्, साधारणाद्यन्यतमभेदात्। भेदस्य प्रतियोगित्वसम्बन्धेन हेतुत्वं बोध्यम्। न चोक्तहेतोः पक्षमात्रवृत्तित्वेन दृष्टान्ताभाव इति वाच्यम्, यो न तादृश संख्यावान् सन् प्रतियोगित्वसम्बन्धेन तादृशान्यतमभेदवान् तथा घट इत्याकारकव्यतिरेकि दृष्टान्तस्यैव सुलभत्वात्। यद्यपि व्यतिरेकिदृष्टान्तस्याप्रयोजकत्वेन न साध्यसाधकत्वम् अन्यथा सव्यभिचारत्वस्यापि हेतुत्वसम्भवेन साधारणादिभेदस्य हेतुवानुसरणं निर्युक्तिकं स्यादिति विभाव्यते तदाभेदादित्यत्र ल्यब्लोपे पंचमीमभ्युपगम्य साधारणादिभेदः स्वीकृत्य सव्यभिचारस्त्रिविधः इत्येवं।

तत्र प्रथमः साधारणव्यभिचारो दोषः स च साध्याभाववद्वृत्तित्वरूपः अर्थात साध्यतावच्छेदक सम्बन्धावच्छिन्न साध्यतावच्छेदकेतरधर्मानवच्छिन्न साध्यतावच्छेदकावच्छिन्न साध्यनिष्ठप्रतियोगिताकाभवाधिकरणनिरूपित वृत्तित्वम्

साधारणव्यभिचारत्वम्। यथा पर्वत पक्षकधूमसाध्यक वह्निहेतुकस्थले संयोग–सम्बन्धावच्छिन्न धूमत्वेतरधर्मानवच्छिन्न धूत्वावच्छिन्न धूमनिष्ठप्रतियोगिताका–भावाधिकरण अयोगोलकनिरूपित वृत्तित्वस्य वह्निहेतो सत्वात् भवति लक्षणसमन्वयः। वा सपक्षविपक्षवृत्तिः साधारणः यथोक्तस्थल एव सपक्षः महानसादिः तत्र वृत्तिः वह्निहेतोः एवं विपक्षायोगोलक निरूपित वृत्तित्वस्य वह्नितौ सत्वात् लक्षणसमन्वयः। वस्तुतः सपक्षविपक्षवृत्तित्वापेक्षया विपक्षज्ञवृत्तित्वमेव लाघवात् अर्थात् साध्यवदन्यवृत्तित्वरूपम्।

तथाच साध्यतावच्छेदक सम्बन्धावच्छिन्नसाध्यवत्वावच्छिन्नप्रतियोगिताक भेदप्रकारक निश्चयविशिष्ट वृत्तिहेतुः—साधारणव्यभिचारः।

न च अयं गौः अश्वत्वादित्यत्र विरूद्धस्थले गोत्वाभावद्वृत्तित्वस्याश्वत्वरूपहेतो एवं ह्रदो धूमवान् वह्नेरित्यत्र धूमाभावद् वृत्तित्वस्य वह्नौ सत्वात् विरूद्धे स्वरूपासिद्धावतिव्याप्तिः इति वाच्यम् फलभेदेन तयोर्भेदात्। विरूद्ध ज्ञानस्य समानाधिकरण्यग्रहप्रतिबन्धकत्वं, साधारणव्यभिचार–ज्ञानस्य अव्यभिचारग्रहप्रतिबन्धकत्वं, स्वरूपाऽसिद्धिज्ञानस्य परामर्शप्रतिबन्शकत्वम् इति दूषकताबीजात्मकप्रतिबन्शकतायाः भिन्नतया तस्य पार्थक्यात्।

न च हेत्वघटितसाध्याभाववद्वृत्तित्वादिकमेव साधारणः इति वाच्यम्। तस्य सामान्यलक्षणानाक्रान्तत्वात्। साधारणः अव्यभिचाराऽभावत्तया

व्याप्तिज्ञानस्य प्रतिबन्धकं भवति। यथा हेतुनिष्ठ साध्यवद्भिन्न–वृत्तित्वाभावाभाववत्ताग्रहात्मकस्य साधाणव्यभिचारग्रहस्य अव्यभिचाराऽभावग्रहत्वेन रूपेण प्रतिबन्धकत्वम्।

## साधारणव्यभिचारस्य पूर्वपक्षलक्षणानि

साध्याभाववद्गामित्वम्, साध्यवत्तदन्यवृत्तित्वम् निश्चितसाध्यवत्तदन्यवृत्तित्वम्, सपक्षगत्वम्, सपक्षविपक्षगत्वम्, पक्षान्यसाध्यवत्तदन्यवृत्तित्वम्, साध्यवद्वृत्तित्वे सति सर्वसाध्यवदन्यवृत्तित्वम्

इत्यादयः पूर्वपक्षलक्षणानि।

सिद्धान्तलक्षणन्तु विपक्षवृत्तित्वम्। अत्र विपक्षत्वम् साध्याभाववत्वं,न तु निश्चयगर्भ तज्ज्ञानस्याऽप्रतिबन्धकत्वात् यतः व्याप्तेः निश्चित साध्याभाववद्वृत्तित्वाऽघटितत्वात्।

## आसाधारणः

असाधारणव्यभिचारस्तु "साध्याऽसमानाधिकरण हेतुः" यथा– शब्दः नित्यः शब्दत्वादित्यत्र नित्यत्वाऽसमानाधिकरण शब्दत्वं दोषः। साध्यासमाना–धिकरणहेतुरिति असाधारणदोषज्ञानेन, साध्यसामानाधिकरण्यात्मकव्याप्तिज्ञानस्य प्रतिबन्धः क्रियते, दोषवत्वं च तादात्म्येन एकज्ञानविषयत्वेन वा। न्यायमते शब्दस्य प्रागभावध्वंसप्रतियोगित्वमतः असांधारण्यं साध्याऽसमानाधिकरणत्वं हेतौ भवति इति।

मीमांसकास्तु ईश्वरानंगीकारात् अनित्य शब्दस्य अनादित्वाभावात् वेदस्य अनादिता रक्षणार्थ शब्दं नित्यं मन्यते, तथा च तैः शब्दः अनित्यः शब्दतत्वात् इत्यत्र "साध्याऽसमानाधिकरणहेतुरित्यसाधारण व्यभिचारो मन्यन्ते, नैयायिकास्तु तत्रभ्रान्तिं मन्यन्ते। यथा–शब्दः अनित्यः कार्यत्वात् इति कार्यत्वहेतुनाशब्दस्यानित्यत्वे निश्चिते सत्यपि, यदि कस्यचित्तत्र "अनित्यत्वाऽसमानाधिकरणशब्दत्वमिति दोषाज्ञानं स्यात् तर्हि सः अनित्यसामाना–धिकरण्यवति शब्दत्वे अनित्यत्वसामानाधिकरण्याऽभाववत्ताज्ञानं भ्रम एव। तथाच यावद् भ्रमः तावद् व्याप्तिज्ञानप्रतिबन्धमात्रं हेतुस्तु न दुष्टः भ्रमनाशे सति व्याप्तिज्ञानेन अनुमितिः स्यादेव। असाधारयणयापि नित्यदोषत्वात् "यादृश विशिष्टविषयक निश्यत्वमित्यादिदोषसामान्यलक्षणस्यापि तत्राभावात् न दुष्टत्वम् इति नव्यनैयायिकाः।

प्राचीनास्तु पक्षे साध्यसन्देहदशायामेव असाधारणस्य हेत्वाभासता, न तु निश्चयदशायां, तदानीं पक्षस्यैव निश्चितसाध्यवत्वेन सपक्षतया

सपक्षव्यावृत्तत्वस्य हेतोरभावात्, अतः अनित्यदोषत्वमसाधारणस्येति। एतन्मते हेतोः सपक्षाऽवृत्तित्वज्ञानस्य यथाश्रुतस्य नीलपटावृत्तित्वज्ञानस्य घटवत्ताज्ञाने इव साक्षात् साध्यसामानाधिकरण्यात्मक व्याप्तिज्ञानप्रतिबन्शकत्वाभावात् पक्ष–धर्मता ज्ञानप्रतिबन्धकत्वाभावात् अनुमितिप्रतिबन्धकत्वाभावाच्च हेतुनिष्ठ सपक्षावृत्तित्वस्य हेत्वाभासत्वं परन्तु हेतोरसपक्षाऽवृत्तित्वज्ञाने सपक्षवृत्तित्वघटितपंचरूपोपपन्नत्वेन लिंगस्य पंचावयववाक्याद् बोधाऽसम्भवेन मानसपरामर्शाऽसम्भवात् परस्यानुमितिर्न संभवतीति सपक्षज्ञानविघटकतया उपाधिवद् दूषकत्वम्।

चिन्तामणिकारास्तु ''सर्वसपक्षव्यावृत्तत्वम्'' असाधारणत्वं न तु विपक्षव्यावृत्तत्वमपि, व्यर्थविशेषणत्वात्।

## अनुपसंहारिः

प्राचीनमते ''केवलान्वयिपक्षकत्वम्'' अनुपसंहारिणो लक्षणम्। केवलान्वयि–अत्यताभावाप्रतियोगीपक्षो यस्य स केवलान्वयिपक्षकः, केवलान्वयि–धर्मावच्छिन्नपक्षकहेतुः इति।

यथा सर्व अभिधेयं प्रमेयत्वादित्यत्र सर्वस्यैव पक्षत्वात् तत्र साध्य संशये सति हेतौ साध्य सामानाधिकरण्यसम्बन्धेन सामानाधिरण्य ग्रहस्थलान्तराभावात् सामानाधिकरण्यसम्बन्धेन व्याप्तिनिश्चयः प्रतिबध्यते किच्य तत्र यदा सिद्ध–सिषाधयिषा च तदा साध्यनिश्चयसम्भवेन समानाधिकरण्यघटितव्याप्तिग्रहसंभवात् तस्य सद्धेतोरलक्ष्यतयासिषाधयिषाविरहविशिष्टसिद्धयभावविशिष्टस्य पक्षस्य तदा केलान्वयित्वेऽपि न तत्रातिव्याप्तिः। सर्वमभिधेयं प्रमेयत्वादित्यत्र सर्व पक्षः अभिधेयं–अभिधा–ईश्वरेच्छा शक्तिः–ईश्वरेच्छा विषयत्वमिति साध्यम्। प्रमेयत्वात्–ईश्वरीयप्रमाविषयत्वात् इति हेतुः। तत्र सर्वत्वं धर्मः सप्तपदार्थेषु वर्तते अतः सः अत्यन्ताभावाऽप्रतियोगि इतिकेवलान्वयिधर्मावच्छिन्नस्य सर्वस्य पक्षत्वात्। सर्वत्र पक्षे साध्यसंन्देहात् सपक्षविपक्षाऽप्रसिद्धेश्च साध्यहेत्वोः सामाना–धिकरण्यात्मकव्याप्तिग्रहार्थ स्थलानुपलम्भात् व्याप्तिग्रहात्मककारणाभावेन

कार्यमनुमितिर्नैव भवतीत्यनुपसंहारिणो हेत्वाभासत्वम्। नवीनास्तु सर्वत्वावच्छेदेन पक्षे संशयसामग्री सत्वेऽपि घटत्वावच्छेदेन साध्यनिश्चयोत्पादे बाधकाभावात् पक्षेकदेशेघटे एव ''यत्र घटे प्रमेयत्वं तत्र अभिधेयत्वमिति''—अभिधेयत्वसामाना—धिकरण्यग्रहस्य जायमानत्वेन तत्रानुमितेर्निराबाधात् तत्र प्राचीनाक्ताऽनुपसंहारित्व—ज्ञानस्य अनुमिति तत्करणाऽन्यतर प्रतिबध्कत्वाभावात् तस्य न हेत्वाभासत्वम्। तथा च सहचाराऽग्रहस्य स्वरूपसत एव अनुमित्यनुत्पादप्रयोजकतया तादृशान्यतप्रतिबन्धकज्ञानविषयत्वाऽभावात् हेत्वाभासलक्षणाऽगमनात्हेत्वाभासत्वम्। न च तत्र सहचाराग्रहप्रयोजकः संशय एव हेत्वाभास इति वाच्यम्। तस्यापि स्वरूप सह एव विरोधित्वात्। न च संशयविषयस्य साध्याभावविशिष्टपक्षादेरेवतत्र हेत्वाभासत्वमिति वाच्यम्। सर्वमभिधेयमित्यादावभिधेयत्वाभावविशिष्टपक्षाऽप्रसिद्धेः। ननुसंशयविषय साध्यादेरेव हेत्वाभासत्वमस्त्विति चेन्न। बाधभ्रमवारणाय यादृशः विशिष्ट विषयकज्ञानमनुमितिप्रतिबन्धकं तस्यैव हेत्वाभासत्वेन प्राक् सिद्धान्तित्वात्।

नव्यमते केवलान्वयिसाध्यकत्वमनुपसंहारित्वम। व्यतिरेकि व्याप्तिज्ञानप्रतिबन्धकफलकत्वमपि लक्षणम्।

अनुपसंहारिपूर्वपक्ष लक्षणानि ''असत्यसपक्षविपक्षत्वम्'' केवलान्वयि—धर्मावच्छिन्न पक्षकत्वम्, अत्यन्ताभावप्रतियोगिसाध्यकत्वे सति केवलान्वयि धर्मावच्छिन्न साध्यसन्देहविषय वृत्तित्वम्। साध्यवत्तानिश्चयसामान्यविरो—धिसंशयविषयवृत्तित्वं, साध्यसन्दहेविषयताव्याप्यसाध्यसिद्धयनुकूल—व्याप्तिग्रहोपयिकसत्ताकत्वम्।

## सिद्धान्तलक्षणन्तु

व्याप्तिंग्रहानुकूलैकधर्म्युपसंहाराऽभाववत्वम् विशिष्ट साध्यसाधन—ग्रहाविरोधिनो ज्ञानस्य विषयतया व्यतिरेकव्याप्तिग्रहविरोधितावच्छेदकरूपवत्वमिति, तादृशं रूपं साध्यादेरत्यन्ताभावाऽप्रतियोगित्वादिकम्।



# विरोधसामान्यस्वरूपपर्यवेक्षणम्

यद्यपि साधारणेनऽव्यभिचारग्रहस्य आसाधारणेन सामानाधिकरण्य-ग्रहस्यानुपसंहारिणा च व्यतिरेकव्याप्तिज्ञानस्य प्रतिबन्धो जायते। एवंच व्याप्तिज्ञानप्रतिबन्धकत्वरूप दूषकताबीजस्यैक्येन त्रयाणामपि एकहेत्वाभासत्वमुपपन्नं भवति इत्येवं केचन प्रतिपादयन्ति। परन्तु तेषां मतं न समीचीनम्, यतः दूषकता बीजैक्यस्य एकहेत्वाभासता नियामकत्वे बाधसत्प्रतिपक्ष-विरूद्धानामपि एकमात्रानुमितिविरोधितया दूषकताबीजस्यैकत्वे नैक हेत्वाभासत्वमापद्येत्, एवं साध्याप्रसिद्धया दोषाणामपि व्याप्तिग्रहमात्रविरोधितया दूषकताबीजस्य एकत्वेन अनैकान्तिकत्वापत्तिश्च स्यादतः दूषकता बीजस्यैकत्वं नैकहेत्वाभासतानियामकं किन्तु स्वतन्त्रेच्छया महर्षिणा गौतमेन बाधादिनां दूषकताबीजैक्येऽपि पृथग्हेत्वाभासत्वमप्यभ्युपगतम्, एवं साध्याप्रसिद्धयादेरपि अनैकान्तिकात् पार्थक्यमङ्गीकृतम्, साधारणादित्रयाणांच एकहेत्वाभासत्वमेवाङ्गीकृतम् इति। तदनुरोधे एकहेत्वाभासत्वे हेत्वाभासान्तरत्वे च नियामकमभ्युपगन्तव्यम्, एवं क्रमप्राप्तं विरूद्धनामकं हेत्वाभासत्वं विविच्यते स च विरूद्धनामकं हेत्वाभासत्वं।

साध्याभावव्याप्यस्वरूपः यथागोत्वसाध्यकाश्वत्वहेतौ गोत्वाभावव्याप्यत्वमश्वत्वे विद्यते। अतः अश्वत्वस्य विरूद्धत्वम् नेदं लक्षणं साधु प्रतिभाति, संयोगि द्रव्यत्वादित्यादौ द्रव्यत्वहतौ अतिव्याप्त्यापत्तेः। द्रव्यत्वस्य संयोगाभावव्याप्यत्वात्। संयोगाभावसामानाधिकरण्यरूपस्य संयोगाभावव्याप्यत्वस्य द्रव्यत्वे सत्वात्। यदि च साध्यंवन्निष्ठाभावप्रतियोगिव्याप्यत्वम् विरूद्धत्वमित्युच्यते तदा द्रव्यत्वसाध्यकगुणवत्वहेतौ अतिव्याप्तिः। द्रव्यत्ववन्निष्ठ अत्यन्ताभावप्रतियागि संयोगव्याप्यत्वस्य गुणे सत्वात्, किन्तु साध्यासामानाधिकरण्यत्वे सति साध्या-भावव्याप्यत्वम् अथवा साध्यवदन्याभावव्याप्यत्वं विरूद्धत्वम्। एवंच नोक्तस्थलयोरतिव्याप्तिः। पूर्वस्थले द्रव्यत्वहेतौ साध्याभावव्याप्यत्वस्य सत्वेऽपि साध्यासमानधिकरणत्वरूपविशेषणस्य अभावात्। द्वितीये च द्रव्यत्वरूप

साध्याभावव्याप्यत्वस्य विशेषणदलस्य चाभावात् नातिप्रसंगशंकावकाशः, एवं। साध्यवदन्योन्याभावव्याप्यत्वमपि विरूद्धे एवं हेतौ न तु सद्धैतो अव्याप्यवृत्तेरव्यप्यवृत्तिसाध्यकस्थले तदभावव्याप्यत्वस्य हेतौ विद्यमानत्वेऽपि तादृशसाध्यीयभेद व्याप्त्वस्य हेतौ विरहान्नातिव्याप्त्यवसरः। अत्रेदं चिन्तनीयम् साध्ये हेत्वोः विरोधे यदि पक्षे साध्यमस्ति तदा हेत्वसिद्धयात्मकः स्वरूपासिद्धिरेव दोषः यदि च हेतुरेव पक्षे विद्यते। तत्र साध्याभावपक्षरूप बाध एव इति कथं तत्र असिद्धिबाधातिरिक्तस्य दोषता। यदि च हेतुभिन्नप्रमाणान्तरेण साध्याभावस्य सिद्धिजायते, तत्रैव बाधा दोषता। यदि च हेतुभिन्नप्रमाणान्तरेण साध्याभावस्य सिद्धिजायते, तत्रैव बाधा दोषता। अत्र तु हेतुत्वे नैव साध्याभावसिद्धिर्जायते अतो न बाधत्वमिति यदि ब्रूयाः तदा विशेषणपदस्य वैयर्थ्य स्यात् इति चेत्तथापि हेतोः पक्षे साध्याभावबोधस्यानुपस्थापनेऽपि प्रथमतः उपस्थितस्य विरोधस्यैव कारणत्वेन दोषत्वं स्वीक्रियते।

इदमपि लक्षणद्वयं न साधु साध्याभावसम्बन्धस्य व्यभिचारता– यामेवान्तर्भावात्, एवं साध्यवदन्यत्वव्याप्यत्वमपि न व्याप्यत्वविवेचनावसरे व्यर्थविशेषयणत्वापत्तेः।

अपरेत्तु साध्यानवगतसहचारः साध्याभावसहचारी विरूद्धः। अन्यथा पृथिव्यां मेयत्वेनेतरभेदानुमानं न विरूद्धं स्यात् साध्याभावाव्याप्यत्वात्। सपक्षव्यावृत्तत्वात् तत्साधारणमेव। न च साध्यसहचाराज्ञानदशायां साधारणा– तिव्याप्तिः तदा तस्यापि विरूद्धत्वात् इति प्राहुः। तन्न। विपक्षगामित्वमात्रं दूषकं इत्युक्तत्वात्।

अतः विरूद्धस्य लक्षणमुच्यते साध्यव्यापकीभूताभावप्रतियोगित्वं विरूद्धत्वम्। तथा अयं गौः अश्वत्वात् इत्यत्र गोत्ववन्निष्ठात्यन्ताभावः– अश्वत्वाभावः तत्प्रतियोगित्वस्य अश्वत्वे सत्वात् भवति लक्षणसमन्वयः। अत्रेदमाशंकते यत् साध्यसामानाधिकरण्यघटितव्याप्तिज्ञानादौ हेतौ साध्य– व्यापकीभूताभावप्रतियोगित्वरूपविरूद्धस्य ग्राह्याभावाद्यनवगाहितया प्रतिबन्धकत्वं

न सम्भवति । तर्हि कथं साध्यव्यापकीभूताभावप्रतियोगित्वं विरूद्धत्वम्। तन्न। हेत्वभावस्य साध्यवन्निष्ठाभावाप्रतियोगित्वज्ञानं वस्तुतः तत्प्रतियोगिकाभावस्य हेतोः साध्यसामानाधिकरण्यग्रहं प्रतिबध्नाति।

यदि च तदभावाभावत्वेनासामानाधिकरण्यग्रहेऽपि तत्वेन सामानाधिकरण्यग्रहो न विरूध्यते इति भाव्यते तदा वृत्तिमतः साध्यवदवृत्तित्वं साध्यवद् वृत्तित्वानधिकरणत्वं साध्यासामानाधिकरणधर्मत्वं साध्यवद्वृत्तित्वान–धिकरणधर्मत्वं ·वा विरूद्धत्वम्।

न च असाधारणेऽपि संकर एव इति वाच्यम्। अव्यभिचरितसामाना–धिकरण्यरूपायाः व्याप्तेरव्यभिचारांरोग्रहाविराधिग्रहविषयतया यथा व्यभिचारो हेत्वाभासः तथा सामानाधिकरण्यांशग्रहविरोधिग्रहविषयतया विराधोऽपि हेत्वाभासः।

अत्रेदमाशंकते यत् "विरूद्धस्य स्वार्थानुमानदोषत्वेऽपि परार्थनमानेऽपार्थकत्वम् अयोग्यताज्ञानेन निश्चितानन्वयादिति चेन्न"। अयोग्यता ज्ञानस्य विरूद्धज्ञानोपजीवकत्वेन परार्थानुमानेऽपि विरूद्धदोष सम्भत्येव।

स चायं विरूद्धो हेतुः विधिसाधने त्रिविधः। साक्षात्साध्याभावव्याप्यत्वात्, साध्य व्यापकाभावव्याप्यत्वात्, साध्यव्यापकविरूद्धोपलम्भात्। यथा—धूमवानयं योऽयंधूमवत्तया अनुपलभ्यमानत्वात् निरग्निकत्वात् जलाशयत्वात्।

साध्यव्यापकविरूद्धोपलम्भस्य सर्वत्र सत्वात् कथं विरूद्धः विधिसाधने त्रिविधः। इति चेन्न। तदज्ञानेऽपि साध्याभावतद्व्यापकाभावव्याप्यत्वेनापि ज्ञानविषयभूतस्य विरूद्धदोषत्वात्।

निषेधसाधनेऽपि त्रिविधः। प्रंतियोग्युपलम्भात्, साध्यव्यापकाभावोपलम्भात्, साध्यव्यापकविरूद्धोपलम्भात्। यथा निरग्निकोऽयमग्निमत्वात्, धूमाभावशून्यत्वात्, विरोधिज्ञानप्रकारतावच्छेदकधर्मवत्वात्। तेन निर्वह्निकान्यत्वसंग्रहः। धूमवत्वादिति हेतुत्वस्य धूमाभावस्य वह्न्यभावव्यापकत्वग्रहदशायामस्य मध्यमे अर्थात् साध्यव्यापकाभावोपलम्भेऽन्तर्भावः दशाविशेषे। यदा वह्न्यभावव्यापकवह्निसामग्र्या

भावाभावव्याप्यत्वग्रहे तदा चरमे च।

सर्वश्चायं विशेषणद्वारापि तथाकृष्णागुरुप्रभववह्निमानयं कटुका-सुरभिपाण्डुरधूमत्वात्। नच पूर्वोक्तानि धर्मिविभाजकान्येव, सर्वेषामेव साध्या-भावव्याप्यत्वेनैकविधत्वादिति।

विरोधोन्नायकप्रकारत्रैविध्येन धर्मिणोऽपि त्रैविध्याभिधानमिति वदन्ति।

न च विरोधस्थले दोषान्तरस्यावश्यकत्वे किमस्य दोषताभ्युपगमः इति वाच्यम्। स्वरूपासिद्धिव्यभिचाराग्रहदशायां विरोधज्ञानेनाप्युमिति प्रतिबन्धादस्य दोषान्तरत्वमावश्यकमिति।



# सत्प्रतिपक्षस्थापनायाः प्रयोजनं विमर्शश्च

वाचस्पतिमिश्रैः हेत्वाभासानां मध्ये प्रकरणसममेव सत्प्रतिपक्षशब्देनोल्लेखः कृतः तेषामयमाशयः पक्षप्रतिपक्षात्मकपक्षद्वये विद्यमाने सति एकतरकोटि निश्चायकसामग्र्यभावेन प्रकरणसमस्य अहेतुत्वं। अत एव तस्य हेत्वाभासत्वम्। प्रकरणसमस्यानया व्युत्पत्या अनैकान्तिकेन सह सांकर्य्यमापतेत यतोहि अनैकान्तिकस्यापि साध्यसाध्याभावयोर्मध्ये कस्यापि एकस्यकोटेः अनिर्णायकत्वात्। अथैवम् प्रकरणसमस्यापि पक्षद्वये विद्यमानेनैकतरकोटिनिश्चायकत्वमतः सत्प्रतिपक्षत्वमेव प्रकरणसमस्य लक्षणं वाच्यम्, इममेवाशयं तात्पर्यटीकाकारः वर्णितवान्। यत् सत्प्रतिपक्षस्य अवयवार्थव्याख्यानेनैव सत्प्रतिपक्षःव्याख्यातो भवति तथाचोक्तं दीधितिकारः "अतएव सन् प्रतिपक्षो विरोधि– व्याप्त्यादिमत्तया परामृश्यमाणो हेतुर्यस्य परामृष्यमाणस्य हेतोरसौ सत्प्रतिपक्षः"। इति विग्रहमपि वर्णयन्ति।

अयमाशयः यस्य हेतोः विरोधिव्याप्त्यादिविशिष्टविषयक ज्ञानविषयीभूतः हेतुर्विद्यते सः सत्प्रतिपक्षस्थवा यस्य हेतोः विद्यमानता दशायां विरोधिपरामर्शो विद्यते स हेतुः सत्प्रतिपक्षः भवति।

अतः इदं निष्पन्नं भवति यत् प्रकरणसम एव सत्प्रतिपक्षपदवाच्यः, तल्लक्षणन्तु प्रकृतसाध्यानुमापक बलशालित्वे सति प्रकृतसाध्याभावानुमापक बलशालिहेत्वन्तरकत्वम्। यत्र वह्न्यनुमापक व्याप्तिपक्षधर्मता विशिष्टो धूमहेतुः वह्न्यभावव्याप्य पक्षधर्मता विशिष्टजलहेतुकः भवति तदानीं धूमहेतोः सत्प्रतिपक्षितत्वम्।

लक्षणमिदं विवेचनावसरे न साधु यतः एतल्लक्षणघटकीभूतमनुमापकत्वं यदि अनुमित्युपधायकत्वं तदा सत्प्रतिपक्षदशायां कस्यापि हेतोरनुमित्यजनकतया लक्षणमिदं असम्भवग्रस्तं स्यात्। यदि चानुमितिजनकताच्छेदकधर्मवत्त्वरूपं स्वरूपयोग्यत्वं तदा लक्ष्येषु लक्षणसमन्वयः कर्तु शक्यते, परन्तु

लक्षणघटकीभूतवलपदार्थनिर्वचनं न हि कर्तुं शक्यते। तथाहि न पक्षसत्वसपक्षसत्वविपक्षासत्वरूपं वलं व्यतिरेकिणि सपक्षाप्रसिद्धया सपक्षत्वस्यासम्भवात्, नापि व्याप्तिपक्षधर्मतावत्वं एकत्रतदभावात् एवं "अनिर्धारित विशेषबोधितसाध्यविपर्यकत्वं सत्प्रतिपक्षत्वमित्यपि न, यतोहि एतल्लक्षणस्वरूपमनिर्धारितविशेष साध्यविरोधिबोधकलिंगकत्वे सति अनिर्धारितविशेषसाध्य बोधकत्वविशिष्ट लिंगत्वमित्येवं भवति परन्तु अत्रापि लक्षणे बोधकत्वं यदि बोधोपधायकत्वं तदा सत्प्रतिपक्षतादशायामुभयोरबो–धकत्वात् लक्षणमिदमसम्भवग्रस्तम्। यदि च बोधजनकतावच्छेदकधर्मवत्व–रूपस्वरूपयोग्यत्वम् तदा विशेषपदार्थस्य व्याप्तिभंगाभंगरूपस्य निर्वचनासम्भवात् लक्षणमिदं न संगच्छते।

यदि चेत् अत्र ब्रूमः सत्प्रतिपक्षलक्षणं हि एकं व्यवहारोपयिकमपरंच विभाजकम्। तत्रव्यवहारोपयिकम् लक्षणमिदानीं विचिन्त्यते "साध्यविरोध्युपस्थापन समर्थसमानबलोपस्थित्या प्रतिरूद्धकार्यकलिंगत्वम् तत्त्वम्" यथा ह्रदो वह्निमान् धूमादित्यत्र उपस्थिति ह्रदो वह्न्यभाववानित्याकारकोपस्थितितज्जननसमर्थ–समानबलोपस्थितिः वह्न्यभावव्याप्यजलवानित्याकारकोपस्थितिः तत्प्रतिरूद्धं कार्यं ह्रदो वह्निमानित्याकारकानुमित्यात्मकं कार्यं तादृशकार्यकपरामर्शविषयलिंगत्वस्य धूमहेतौ सत्वात् भवति लक्षणसमन्वयः।

यद्यपि यदा वह्न्यभावव्याप्य जलवान् ह्रदः इत्याकारक विरोधिपरामर्शः अग्रहीताप्रामाण्यकः अथ च वह्निव्याप्य धूमावान् ह्रद इत्याकारकः गृहीताप्रामाण्यकः तदानीं धूमहेतुः न सत्प्रतिपक्षः तत्रातिप्रसंगवारणाय समानपदं निवेशितम्, तदर्थश्च अग्रहीताप्रामाण्यकसाध्यसिद्ध्यौपयिकपरामर्शकालीनत्वम्। एवं साध्यविरोध्युपस्थापन समर्थाग्रहीताप्रामाण्यकसाध्यसिद्ध्यौपयिक परामर्श कालीनबलोपस्थित प्रतिरूद्धकार्यकलिंगत्वम् सत्प्रतिपक्षत्वम् इति लभ्यते, उक्त स्थले च अग्रहीताप्रामाण्यिका या साध्यविरोध्युपस्थापन समर्था उपस्थितिः सा न अग्रहीताप्रामाण्यकसाध्यसिद्ध्यौपयिक परामर्शकालीना इति न तत्रातिव्यप्तिः।

एवं एतल्लक्षणघटकीभूतसमर्थान्तविशेषणानुपादाने बाधाश्रयासिद्धिनिर्णयस्यापि अनुमितिविरोधितया तत्रातिव्याप्ति प्रसज्येत, तदुपादाने च बाधश्रयासिद्धि निर्णयात्मिका या उपस्थिति सा न साध्यविरोध्यनुमितिजननयोग्या अतो न तामादायातिप्रसंग शंकावकाश:। न चासौ न व्याप्तिपक्षधर्मतात्वकेवलोपस्थितिरिति वाच्यम् व्याप्तिपक्षधर्मताविरहस्य साध्यत्वे पक्षतावच्छेदकत्वे वा सम्भवति। ननु बलपदं प्रकृतसाध्याभावव्याप्तिविशिष्टप्रकृतपक्षधर्मतापरमिति नायं दोष:। प्रकृते वह्निव्याप्तिविशिष्टपर्वतवृत्तित्वव्याप्तिविशिष्ट धूमवृत्तिताया: बलत्वात् एतदभिप्रायेण दीधितिकारेण निगदित: ''पक्ष: साध्याभावव्याप्यवान् साध्यं पक्षवृत्तित्वाभावव्याप्यवदिति पक्षस्य व्यापकभेदेन च अन्वयव्यतिरेकभेदेन च व्याप्तेश्च भिन्नत्वादेकोपादाने अन्यासंग्रहेण बलस्याऽविवक्षिततत्वाच्च।

न च अनुगतरूपेण दर्शितसकलव्याप्तिपक्षधर्मता निवेशे नायं दोष: इति वाच्यम्। साध्यधीविरोध्यनुमितिजनकज्ञानविषयत्वेन बलमुपादाय बलोपस्थित्यभिधानं च शिरोवेष्टनेन नासिका स्पर्शमनुधावति।

साध्यस्य= साध्यसिद्धे: विरोधिन्या:—पक्षो साध्याभाववान् इत्याद्युपस्थिते: साध्यविरोधी साध्यवत्ताज्ञान प्रतिबन्धकज्ञानविषयो बाध:, साध्याभाववत् पक्षादि:, तदुपस्थिते: वा जननयोग्याया समानबलोपस्थित्या—तथाविधव्याप्त्यादिबुद्धया प्रतिरूद्धं कार्यं यस्य तादृशलिंगत्वमिति सिद्धान्त सत्प्रतिपक्षत्वम्। यथा ह्रदो वह्निमानित्याकारक साध्यसिद्धे: विराधिन्या: ह्रदो न वह्निमानित्याकारकोपस्थिते: जननयोग्यया तथाविध व्याप्त्यादिबुद्धया अर्थात् वह्न्यभावव्याप्य जलवान् ह्रदरित्याकारकव्याप्त्यादिबुद्धया प्रतिरूद्धं कार्यं ह्रदो वह्निमानित्याकारककार्य यस्य धूमहेतो: तादृशलिंगत्वं धूम हेतौ सत्वात् भवति लक्षण समन्वय:। अथैवं पक्षे साध्यवति साध्याभाववत् पक्षादेरप्रसिद्धया सत्प्रतिपक्षितसद्धेतावव्याप्तिरिति चेन्न। यद्रूपावच्छिन्न धर्मिणि यद्रूपावच्छिन्नवत्ताज्ञानं पक्षतावच्छेदकावच्छिन्ने साध्यतावच्छेदकावच्छिन्नवत्ताज्ञांनं प्रतिबन्धकं तद्रूपावच्छिन्ने पक्षे तद्रूपावच्छिन्न साध्यकानुमिति जननयोग्योपस्थिति प्रतिरूद्धकार्यकत्वं सत्प्रतिपक्षत्वम्।

केचित्तु यत्र बाधो दोषः तत्रैव सत्प्रतिपक्षो दोषः यथा ह्रदो वह्निमान् धूमादित्यत्र तत् प्रतिहेतुपरामर्शसम्बलनदशायां तत्रैव सत्प्रतिपक्षव्यवहारो यथार्थः इत्याशयेनैव दीधितिकारेण साध्यविरोधि साध्यवता ज्ञानं प्रतिबन्धकं ज्ञानविषयो बाधः एतत्कल्पानुसरणम् कृतम्। तथा च साध्यवत्पक्षकहेतोरलक्ष्यतया न तत्रातिव्याप्तिः।

न च कांचनमय पर्वतस्य पक्षत्वे रजतमय वह्नेः साध्यत्वे कांचनमयपर्वतत्वावच्छिन्नपक्षाऽप्रसिद्धया, एवं रजतमयवह्नित्वावच्छिन्न साध्याऽप्रसिद्धया च तादृश सत्प्रतिपक्षाव्याप्तिः इति वाच्यम्। प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यता निरूपिप्रकृतसाध्यतावच्छेदकावच्छिन्न प्रकारताशाल्यनुमितिजननयोग्योपस्थितिप्रतिरूद्धकार्यकत्वस्य सत्प्रतिपक्षत्वात् न काप्यनुपपत्तिः।

वस्तुतः साध्यवताज्ञानप्रतिबन्धकज्ञानत्वेनैवोपस्थितिः लक्षणे निवेश्या, साध्यवत्ताज्ञानप्रतिबन्धकज्ञानविषयविषयकत्वेन तन्निवेशस्य शिरोवेष्टनेनेत्यादि न्यायेन हेयत्वात्। साध्यादिपक्षकसाध्यतावच्छेदकाद्यभावव्याप्यवत्तापरामर्शवारणाय विशिष्टसाध्यादिग्रहाविरोधित्वेनापि प्रथमोपस्थितिर्विशेष्या। अर्थात् साध्ये साध्यता–वच्छेदकवैशिष्ट्यावगाहि ग्रहत्वाव्यापकत्वं साध्यवत्ताज्ञाननिष्ठप्रतिबश्यतायां निवेशनीयम्। तथाच सारध्याप्रसिद्धिनिश्चय निरूपितायां साध्यवत्ताज्ञान–प्रतिबध्यतायां तादृशग्रहत्वव्यापकत्वादेव नातिव्याप्तिः। एवं कांचनमयत्वाभावव्याप्यवान् पर्वत इति परामर्शकाले धूमहेतोः सत्प्रतिपक्षतत्ववारणाय विशिष्टपक्षग्रहाविराधित्वेनापि उपस्थितिर्विशेष्या। तदर्थश्च पक्षेपक्षतावच्छेदक–वैशिष्ट्यावगाहिग्रहत्वाव्यापकत्वम्। तदपि साध्यवत्ताज्ञाननिष्ठप्रतिबध्यताविशेषणम्। तथा च कान्चनमय पर्वतो वह्निमानित्यनुमिति प्रतिबन्धकीभूता या कांचनमयत्वाभाववान् पर्वत इत्याकारकोपस्थिति तज्जनिका या कांचनमयत्वाभाव व्याप्यवान् पर्वत इत्युस्थिति तत्प्रतिरूद्धकार्यकत्वस्य धूमे सत्वेऽपि न क्षतिः। पक्षाप्रसिद्धिनिश्चयनिरूपितायां पक्षे साध्यवत्ताज्ञान प्रतिबध्यतायां तादृशग्रहत्वव्यापकत्वादेव नातिव्याप्तिः। तथाच साध्यवत्ताग्रहत्वव्यापिका अथ

च पक्षे पक्षतावच्छेदक वैशिष्ट्यावगाहि ग्रहत्वाव्यापिका साध्ये साध्यता–वच्छेदकवैशिष्ट्यावगाहिग्रहत्वाव्यापिका या प्रतिबध्यता तन्निरूपित प्रतिबन्धकतावत् उपस्थितिजनकोपस्थितिप्रतिरूद्धकार्यकत्वम् लक्षणमिति।

वह्निव्याप्याभावसाध्यकस्थले वह्निव्याप्याभावव्याप्यवान् इति परामर्शकालीन वह्निव्याप्य व्याप्यवानिति परामर्शदशायामेव सत्प्रतिपक्षत्वं न तु वह्निव्याप्यवान् इति परामर्शकाले, तस्य तत्स्थलीयबाधनिश्चयरूपत्वात्। एव चोपस्थितिपदेन पर्वतो वह्निमानिति ज्ञानमादाय तज्जनिका या पर्वतो वह्निव्याप्यवान् इत्याकारकोपस्थितिस्तत्प्रतिरूद्धकार्यकत्वस्य वह्न्यव्याप्याभाव–साध्यकस्थलीयहेतौ सत्वादतिव्याप्तिः। साध्य विरोधित्वोपादाने तु वह्निमत् पर्वतविषयकोपस्थितेः साध्यीभूतवह्निव्याप्याभावानुमिति प्रतिबन्धकत्वा–भावान्नातिव्याप्तिः।

न च साध्याभाववत् पक्षविषयकत्वमेवोपस्थितौ निवेश्यतां किं साध्यवत्ताज्ञान प्रतिबन्धकत्वोपादानेनेति वाच्यम्। साध्य धर्मिकपक्षवृत्तित्वा–भावव्याप्यवत्तापरामर्शदशायां सत्प्रतिपक्षत्वानुपपत्तेः। अथैवमपि उक्तातिव्याप्तिर्दुवारैव पर्वतो वह्निव्याप्यवान् वह्निमांश्चेति समूहालम्बनोपस्थितेः वह्व्याप्याभावरूप साध्यवत्ताज्ञान प्रतिबन्धकत्वात्। तत्र च वह्निव्याप्यवानित्युपस्थितौ वह्निमत् पर्वतविषयकोपस्थितिजनकत्वस्य च सत्वात् उच्यते गदाधरभट्टाचार्यः "वह्निव्याप्यवत्पक्षोपस्थितेरपि साध्यवत्ताज्ञान प्रति–बन्धिकी वह्निव्याप्यादिमत् पक्षविषयकसमूहालम्बनरूपवह्न्यादिमत् पक्षविषयकानुमितिं प्रति स्वरूपयोग्यतया यथाश्रुते उक्तातिव्याप्तिदुर्वारतया साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नानुमिति निष्ठकार्यतानिरूपित कारणताश्रयत्वपर्यन्तं समर्थान्तेन विवक्षणीयम्।"

तथा च वह्निमत् पर्वतविषयकानुमिति निष्ठकार्यतायाः साध्यवत्ताज्ञान–प्रतिबन्धकतावच्छेदकंविषयित्वानवच्छिन्नत्वाददोषः।

न च कार्यतायामनुमितिनिष्ठत्वनिवेशो व्यर्थः इति वाच्यम्। पर्वतपक्षक

वह्निसाध्यकस्थले वह्निव्याप्यवान् पर्वत: एवं वह्न्यभाववान् पर्वत इति ज्ञानकाले सत्प्रतिपक्षतत्वापत्ति: तथाहि– वह्निमान् पर्वत इति ज्ञानप्रतिबन्धकी–भूतवह्न्यभाववान् पर्वत इति कार्यतानिरूपित कारणताश्रयो य: वह्न्यभाववान् पर्वत इति योग्यताज्ञानम् बाध निश्चयविधया तत्प्रतिरूद्धकार्यकत्वस्य धूमे सत्वात् अतोऽनुमितिनिष्ठत्वनिवेश:। एवं च तादृश कार्यताया अनुमित्यवृत्तित्वान्न दोष:। तथा च पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपित साध्यतावच्छेदका–वच्छिन्नप्रकारता शालिबुद्धित्वव्यापक प्रतिबध्यतानिरूपित प्रतिबन्धकतावच्छेदक–विषयित्वावच्छिन्नानुमिति निष्ठकार्यता निरूपित कारणतावदुपस्थितिप्रयुक्तानुत्पाद–प्रतियोग्युत्पत्याश्रय कार्यकपरामर्श विषयलिंगत्वम्।

अनुगमस्तु पक्षतावच्छेदकविशिष्टग्रहत्वव्यापकप्रतिबध्यता विशिष्ट विषयिताविशिष्टपरामर्शविषयत्वम्। ग्रहे पक्षतावच्छेदकवैशिष्ट्यंच स्वावच्छिन्नविशेष्यतानिरूपित साध्यतावच्छेदक सम्बन्धावच्छिन्न साध्यता–वच्छेदकावच्छिन्न प्रकारताकत्वसम्बन्धे। विषयतायां प्रतिबध्यतावैशिष्ट्यंच स्वनिरूपित प्रतिबन्धकतावच्छेदक विषयित्वावच्छिन्नुमिति निष्ठजन्यतानिरूपित जनकतावदुपस्थितीयत्व समबन्धेन। परामर्शे विषयतावैशिष्ट्यंच स्वनिष्ठप्रयोजकतानिरूपित प्रयोज्यतावदभावप्रतियोग्युत्पत्याश्रयीभूतानुमितिजनकत्व सम्बन्धेन।

न च साध्यविरोध्युपस्थितिजननसमर्थोपस्थितिकालीन परामर्शविषयलिंगत्वमित्येव समीचीनम् तत्प्रतिरूद्धकार्यकज्ञानविषयत्वपर्यन्तनिवेशनं व्यर्थमिति वाच्यम्। अप्रामाण्यग्रहविशिष्टा या व्याप्त्याद्युपस्थितेर्न विरोध्यनुमिति–जननयोग्यत्वं तदग्रहविशिष्टत्नेवैव परामर्शस्यानुमितियोग्यत्वात्इति न तादृशोपस्थितिमादायातिव्याप्तिप्रसक्तिरिति वाच्यम्, विरोधिव्याप्त्यादि–विषयत्वलक्षणयोग्यताशालिन्या अप्युपस्थिते: अप्रामाण्यग्रहे सत्प्रतिपक्षत्व–ऽसंग्राहकत्वात् कार्य प्रतिरोधानुधावनम्।

मिश्रमते निश्चितप्रामाण्यकपरामर्शद्वयसत्वे एव सत्प्रतिपक्षितत्वम्,

अनिश्चितप्रामाण्यकपरामर्शयोरकाणत्वात् च न साध्यतदभावानुमित्योरापित्तः। अत्रोत्तेजकत्वं प्रतिबधकतावच्देदकीभूताभावप्रतियोगित्वम्। तथा च वह्निव्याप्य-धूमवान् पर्वतः वह्न्यभावव्याप्य पाषणमयत्ववान्पर्वत इति ज्ञानं प्रमानिश्ःयसत्वे सत्प्रतिपक्षत्वापत्तिवारणाय समानपदम्। मिश्रमते समानपदस्य व्यावृत्तिः पूर्वोक्तव्यावृत्याभिन्ना एव। ''प्रामाण्यनिर्णयेन अधिकबलतया बाधकस्य विरोधि परामर्शस्य वारणाय समानपदमिति''। तत्तुच्छं व्यभिचारेणप्रामाण्यग्रहस्याऽबलत्वात्।

अजनितविरोधिबोधत्वेन च विरोधिपरामर्शो विशेषणीयः। विरोधिपरामर्शे स्वजन्य कार्याभावविशिष्टत्वनिवेशेन (अर्थात् उक्त विरोधिपरामर्शेविशेषेणनिवेशेन) वह्निव्याप्यवान् वह्न्यभावव्याप्यव्याप्यवानिति परामर्शाभ्यां वह्निमान्वह्न्यभावव्याप्यवान् इत्यनुमितिः अत्र विरोधि वह्नि साध्यक परामर्शेन वह्न्यभावसाध्यक हेतोर्न सत्प्रतिपक्षितत्वम्। अत एवऽग्रिमलक्षणे विरोधि-बोधकान्येति फलतो ज्ञानविशेषणम्। एकस्य अप्रामाण्यग्रहेऽपरेणानुमिति-जननात्तद्वारणाय वा तत्। तथा च व्यवहारोपयिकं द्वितीयसत्प्रतिपक्षलक्षणन्तु विरोधिबोधकान्यगमतोपयिकरूपसम्पत्तिमत्तया ज्ञानमानेन प्रतिरूद्धकार्यकत्वं वा तत्वम्।

## सत्प्रतिपक्षस्य दूषकत्वम्

अस्य दूषकताबीजं तु अनुमित्यनुत्पादकत्वम्, न तु एकत्र व्याप्तिपक्ष-धर्मत्वाभाव सद्धेतोरपि सत्प्रतिपक्षोद्भावनदशायां सत्प्रतिपक्षत्वात्। अथवा परस्पराविरूद्धयोः हेतुप्रतिहेत्वोरेकत्राऽसत्वनियमेन व्याप्तिभंगद्वारा अस्य दूषकत्वम्,(परन्तु व्याप्तिभंगद्वारा निर्णयानुत्पादकत्वमेवास्य फलम्) तदनुसारेणैव 'निबन्धे तु हेत्वाभासानां फलद्वारकं लक्षणमित्यादि सन्दर्भे एकतरपक्षानिर्णयेन ''कथमत्रतत्वनिर्णयः'' इति जिज्ञासा जनिका व्याप्तिपक्षधर्मतोपस्थितिः प्रकरणसमः इति लक्षणं कुर्वता निबन्धकृतां अभिमतत्वेनोपस्थापितम्। सत्प्रतिपक्षस्यैवापरं नाम प्रकरणसम इति प्रतिपादितम्।

## रत्नकोषकारमतम्

रत्नकोषकृतस्तु शब्दो नित्यः श्रावणत्वात्, शब्दोऽनित्यः कार्यत्वात् इत्यादि सत्प्रतिपक्षस्थले नित्यत्वव्याप्यश्रावणत्ववान् शब्दः अनित्यत्वव्याप्यकृतकत्वान् शब्द इति विरूद्धनित्यत्वानित्यत्वोभय–सिद्धिजनकसामग्री सम्बलनदशायां शब्दो नित्यो न वेति संशयाकारानुमितिर्जायते। यद्यद्व्यक्तिसत्वे विशिष्टबुद्धिर्न जायते तद्व्यक्तेरेव विशिष्टबुद्धिप्रतिबन्धकत्वम्। एवंच कोट्यन्तरविशेषदर्शनसहितविशेषदर्शनव्यक्तिनां प्रतिबन्धकत्वाऽकल्पनात् संशयानुमितिर्निष्प्रत्यूहैव। अयं भावः बाधादिनिश्चयप्रतिबन्धकतायां विरोध–विषयकत्वमात्रं न प्रयोजकम्, तथासति अप्रामाण्यज्ञानास्कन्दितस्यापि विरोधि–परामर्शस्य विरोधितापत्तेः, किन्तु निश्चितप्रामाण्यकत्वे सति विरोधिविषयकत्वं प्रयोजकं वक्तव्यम् सत्प्रतिपक्षस्थले च उभयव्याप्यवत्ताज्ञानयोरेव प्रामाण्याऽनिश्चयान्नानुमितिप्रतिरोध इति। तथा च संशयानुमितिरेव दूषकताबीजम्।

निश्चयत्वावच्छिन्न हेतुभूतात्परामर्शादितः कथं संशयानुमितिः संशयजनकसामग्रयभावादिति न शक्यम्, यतः संशयत्वं यदि कस्यचिज्जन्यतावच्छेदकं स्यत्तदा सामग्री अपेक्षणीया स्यात्, संशयत्वं जन्यतावच्छेदकमेव न, किन्तु एक किन्तु एक धार्मिकविरूद्धभावाभाव–प्रकारकज्ञानसामग्री सहित धर्मितावच्छेदकप्रकारक ज्ञानरूपासामग्री प्रत्यक्षसंशयं प्रति क्लृप्ता तथानुमितिस्थलेऽपि तादृशसामग्र्या संशयजननेन काप्यनुपपत्तिरिति प्राहुः। तच्चिन्त्यम्। अप्रामाण्यज्ञानानास्कन्दितस्य विरोधिव्याप्यवत्तानिश्चयस्य चैकरूपेण तद्वत्ता बुद्धिमात्रं प्रति विरोधित्वकल्पनेनैव सर्वानर्थपरिहारात्।

## विभाजकलक्षणम्

सत्प्रतिपक्षस्तु साध्याभावव्याप्यवान् साध्यवदन्यत्वव्याप्यवांश्च पक्षः पक्षनिष्ठौ साध्याभाव साध्यवद्भेदव्याप्यो इत्येवमादिः इत्येकमेव'' इति दीधितिकारः।

विभाजकन्तु प्रकृतपक्षसाध्यवैशिष्ट्यग्रहविरोधित्वे सति विशिष्टपक्ष–

साध्यग्रहाविरोधिप्रकृतपक्षसाध्यवैशिष्ट्यग्रहविरोधिरूपोन्नायकत्वम्। तथा च पक्षतावच्छेदकावच्छिन्न विशेष्यतानिरूपित साध्यतावच्छेदकसम्बन्धावच्छिन्न साध्यतावच्छेदकावच्छिन्न प्रकारता शाल्यनुमितित्वव्यापकप्रतिबध्यता निरूपित प्रतिबन्धकतावच्छेदिक सती विशिष्ट पक्ष विशिष्टसाध्यग्रहत्वाव्यापिका निरूक्त पक्षसाध्यवैशिष्ट्यग्रहत्वव्यापिका या प्रतिबध्यता तन्निरूपित प्रतिबन्धकतावच्छेदक विषयित्वावच्छिन्न जन्यता निरूपित जनकतावच्छेदिका च यद्रूपावच्छिन्न विषयिता तद्रूपवत्वं सत्प्रतिपक्षत्वम्। तादृशी च वह्न्यभावव्याप्यविशिष्टह्रदादिनिरूपित विषयितेति तत्र लक्षणसमन्वयः।

न च सत्यन्तदलं व्यर्थमिति वाच्यम्, ह्रदो वह्निमान् इत्यत्र ह्रदत्वावच्छिन्नविशेष्यतानिरूपित वह्नित्वावच्छिन्न प्रकारताशाल्यनुमितित्वव्यापक प्रतिबध्यता निरूपित प्रतिबन्धकतावच्छेदकीभूता वह्न्यभावव्याप्यवद् ह्रदविषयिता तदवच्छिन्न जन्यतानिरूपित जनकतावच्छेदिका या वह्न्यभावव्याप्यव्याप्यवद् ह्रदत्वावच्छिन्न विषयिता तादृशविषयितानिरूपकतावच्छेकत्वस्य वह्न्यभावव्याप्यव्याप्यवद् ह्रदत्वे सत्वेन वह्यभावव्याप्यव्याप्यवदह्रदेऽतिव्याप्तिः। तदुपादाने तु सत्प्रतिपक्षव्याप्यविषयिताः प्रतिबन्धकतानवच्छेदकत्वान्नातिव्याप्तिः

सत्यन्तदले पक्षतावच्छेदकावच्छिन्नविशेष्यत्वानुक्तौ असम्भव साध्य–वैशिष्ट्यग्रहविरोधित्वाप्रसिद्धेः। यत्किंचिद्धर्मावच्छिन्नविशेष्यतेत्युक्तौ "वह्न्यधिकरणत्वं पर्वत" इति वह्न्यधिकरणत्वपक्षकाऽऽधेयता सम्बन्धेन पर्वत–साध्यकस्थले वह्यधिकरणत्व व्याप्य व्याप्योभाववत् पर्वतेऽतिव्याप्तेः यत्किचिंत् धर्मपदेन वह्न्यधिकरणत्व व्याप्यव्याप्याभावत्वमादाय तदवच्छिन्न धर्मिक–पर्वतप्रकारकानुमिति विरोधि, एवं वह्न्यधिकरणत्वधर्मिक पर्वतसाध्यकानुमिति विरोधियद् वह्न्यधिकरणत्वाभावव्याप्यवत् पर्वत इति ज्ञानं तज्जनकं यद्वह्न्य–धिकरणत्वाभावव्याप्यव्याप्यवत् पर्वत इति ज्ञानं तद्विषयत्वस्य तत्र सत्वात् एवं प्रकृतसाध्यकत्वानिवेशे ह्रदो वह्न्यधिकरणत्वानित्यादौ वह्यधिकरणत्वाभाव व्याप्यव्याप्यवद् ह्रदेऽतिव्याप्तिः। ह्रद पक्षक वह्न्यधिकरणत्वाभाव व्याप्याभाव प्रकारकानुमिति विरोधित्वस्य ह्रदपक्षक वह्न्यधिकरणत्वसाध्यकानुमिति

विरोधियद वह्न्यधिकरणत्वाभावव्याप्यवान् ह्रद इति ज्ञानं तज्जनकज्ञानविषयत्वस्य च तत्र सत्वात्।

पक्षतावच्छेदकावच्छिन्नविशेष्यता निरूपित साध्यतावच्छेदकावच्छिन्न प्रकारताशालि दोषविशेषजन्यज्ञानमाहार्यज्ञानं प्रति च साध्याभावव्याप्यवत्ता–ज्ञानस्याप्रतिबन्धकतया सत्प्रतिपक्षस्यैवाऽसंग्रह इति ज्ञानत्वमुपेक्ष्याऽनुमितित्वनिवेशः।

प्रकृतपक्षसाध्यवैशिष्ट्यावगाहिग्रहत्वावच्छिन्न प्रतिबध्यतानिरूपित–प्रतिबन्धतावच्छेदिका सती विशिष्टपक्षसाध्यग्रहाविरोधिप्रकृतपक्षसाध्यग्र–विरोध्युन्नायकतावच्छेदिका यादृशविशिष्टविषयिता तादृशविशिष्टत्वं सत्प्रतिपक्षत्वम् इति सत्यन्तदले तादृशग्रहत्वनिष्ठावच्छेदकताकप्रतिबध्यता निवेशे ग्रहत्वस्य तादृशग्रहत्वानतिरिक्ततया प्रतिबध्यताम्नात्रस्यैव ग्रहत्वावच्छिन्नतया तादृशवैशिष्ट्यावगाहिग्रहत्वावच्छिन्नत्वस्य विशेषणस्याऽव्यावर्तकतापत्तिरतस्–तादृशवैशिष्ट्यावगाहित्वविशिष्टग्रहत्वगतसमुदायवृत्यवच्छेदकताक प्रतिबध्यता निवेशनीया।

नन्वत्र प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपित प्रकृतसाध्यता–वच्छेदकावच्छिन्न प्रकारत्वावच्छिन्न प्रतिबध्यता निवेशेनैव तादृश सत्प्रतिपक्षसंग्रहः। तथाहि–ह्रदत्वावच्छिन्न विशेष्यता निरूपित काचनमयत्ववह्नित्वोभयधर्मा–वच्छिन्नप्रकारताया अपि ह्रदत्वावच्छिन्नविशेष्यता निरूपित वह्नित्वावच्छिन्न प्रकारतात्वेन, कांचनयत्वह्रदत्वोभय धर्मावच्छिन्नविशेष्यताया अपि वह्नित्वावच्छिन्न प्रकारता निरूपित ह्रदत्वावच्छिन्न विशेष्यतात्वेन चोक्तप्रतिबध्यतावच्छेदकत्वात् कथमव्याप्तिरिति चेन्न। ह्रदो वह्निमानित्यत्र वह्न्यभावव्याप्यव्याप्यवद् ह्रदे सत्प्रतिपक्षोन्नायकेऽतिव्याप्तिः। ह्रदो वह्नि वह्न्यभावव्याप्यव्याप्याभाव एतदुभयवानिति ज्ञानीयवह्नित्वावच्छिन्नप्रकारताया अपि वह्न्यभावव्याप्य व्याप्याभावत्वावच्छिन्नप्रकारतात्वेनावच्छेदकत्वात् तादृश प्रकारतात्वावच्छिन्न प्रतिबध्यता निरूपित प्रतिबन्धकतायाः प्रकृतपक्ष साध्यवैशिष्ट्यावगाहिग्रह–प्रतिबन्धकतावच्छेदकीभूत वह्न्यभावव्याप्यवद् ह्रदत्वावच्छिन्न विषयित्वावच्छिन्न

जन्यता निरूपित जनकतायाश्च वह्न्यभावव्याप्य व्याप्यवान् ह्रदः इति ज्ञाने सत्वादिति अनतिरिक्तवृत्तित्व रूपावच्छेदकत्वानुसरणम्। तन्निवेशे च ह्रदो वह्निमानिति ज्ञानं तादृश प्रतिबध्यतायाः असत्वान्नातिव्याप्तिः।

ननु प्रकृतानुमित्यवृत्तिविषयता इत्येवोच्यताम् किं सत्यन्तदलनिवेशेन, वह्न्यभावव्याप्यव्याप्यवान् ह्रद इत्यस्यानुमित्या सह समूहालम्बनसम्भवात् वह्न्यभावव्याप्यव्याप्यवद् ह्रदेऽतिव्याप्तिविरहात्। न च वह्न्यभावव्याप्यवान् ह्रद इत्यस्याप्रामाण्यज्ञानास्कन्दितस्याऽव्याप्यवृत्तित्वज्ञानास्कन्दितस्य वा अनुमित्या सह समूहालम्बनसम्भवादसंभवापत्तिरितिवाच्यम्। प्रामाण्यज्ञानानास्कन्दिताऽव्याप्य–वृत्तित्वज्ञानानास्कन्दितानुमित्यवृत्ति विषयितेत्येवं निवेशेन दोषाभावात्। न च केवंलह्न्यभाव व्याप्यव्याप्यवान् ह्रद इति ज्ञानीय विषयितायाः प्रकृतानुमित्यवृत्तित्वेनाऽतिव्याप्तिदुर्वारैवेति वाच्यम्। प्रकृतानुमितिवृत्तितानवच्छेदकं यद्रूपं तद्रूपावच्छिन्नत्वमित्येवं निवेशेन दोषाभावात्। वृत्तिता च स्वावच्छिन्न निरूपकतानिरूपित विषयितावत्वसम्बन्धेन।

न च वह्न्यभावव्याप्यव्याप्याभाववद् ह्रद पक्षकवह्निसाध्यके वह्न्यभावव्याप्यव्याप्यवद्ह्रदेऽतिव्याप्तिः, सिद्धान्ते तु विशिष्टपक्षग्रहत्वाव्यापकत्वस्य प्रतिबध्यतायां निवेशेनैव वारणादिति वाच्यम्। विशिष्टपक्षग्रहवृत्तित्वस्य विशिष्ट–साध्यग्रहवृत्तित्वस्य विषयितायां निवेशेन दोषाभावात्। न च वह्न्यभाव व्याप्याभावव्याप्यवद् ह्रदपक्षकवह्निसाध्यकसत्प्रतिपक्षेऽव्याप्तिः, निरूक्त विशिष्टपक्षग्रहवृत्तिवस्य सत्प्रतिपक्षविषयतायामभावाद् इति वाच्यम्। विशिष्टपक्षग्रहाव्यवहितप्राक्क्षणज्ञानवृत्तित्वस्य निवेशेदोषाभावात्। वह्न्यभावव्याप्यवान् ह्रद इत्यस्य प्रतिबध्यत्वेन पूर्वमुत्पत्तौ बाधकाभावात्। अत्रोच्यते सिद्धान्ते व्यापकत्वादिप्रयुक्तगौरवस्य सत्वेऽपि अव्यवहितत्वस्य क्षण उदेश्यातिगुरूतयालाघावात्। किंच जलाभाववद्ह्रदपक्षकवह्नि साध्यके जलव्यापक वह्न्यभावसमानाधिकरण जलवद् ह्रदरूप सत्प्रतिपक्षेऽव्याप्तिः, निरूक्तसत्प्रतिपक्षविषयकनिश्चयस्य पक्षतावच्छेदक विशिष्टग्रहाऽव्यवहितप्राक्क्षणे उत्पादयितुमशक्यत्वात्। ☯

## असिद्धेः स्वरूपपर्यालोचनम्'' तद्भेदसमीक्षणञ्च

असिद्धिस्तु— व्याप्तिपक्षधर्मत्वाभावः तद्वान् हेतुरसिद्धः। घटो द्रव्यं सत्वादित्यादौ व्याप्यत्वासिद्धेः सत्वस्य संग्रहायव्याप्यत्वस्य प्रवेशः एवं जलह्रदो वह्निमान् धूमादित्यादौ स्वरूपासिद्धेः संग्रहाय पक्षधर्मत्वस्य प्रवेशः एतल्लक्षणघटकीभूता च व्याप्तिः साध्याभाववदवृत्तित्वे सति साध्यसामाना-धिकरण्यरूपाविवक्षणीया न तु हेतु व्यापकसाध्यसामानाधिकरण्यरूपा तथासति द्रव्यं सत्वादित्यादौ सत्वव्यापक द्रव्यत्वसमानाधिकरण्याप्रसिद्धया असम्भवापत्तेः। लक्षणप्रविष्टं पक्षधर्मत्वमपि हेतुतावच्छेदकसम्बन्धेन पक्षनिरूपिताधेयत्वरूपं ग्राह्यमतो न ह्रदो वह्निमान् धूमादित्यादौ स्वरूपासिद्धं कालिकसम्बन्धेन पक्षवृत्तित्वस्य विद्यमानतया अव्याप्तिः।

अत्रेदं चिन्तनीयमसिद्धिलक्षणे यो हि व्याप्तिपक्षधर्मत्वाभावप्रविष्टः, स किं प्रत्येकाऽभावं द्वयात्मकमुतवा व्याप्तिविशिष्टपक्षधर्मत्वाभाव रूपं, तत्र नाद्यः। प्रत्येकाऽभावस्य सर्वत्र असिद्धिहेतौ विद्यमान् धूमादित्यादौ स्वरूपासिद्धं कालिकसम्बन्धेन पक्षवृत्तित्वस्य विद्यमानतया अव्याप्तिः।

अत्रेदं चिन्तनीयमसिद्धि लक्षणे यो हि व्याप्तिपक्षधर्मत्वाभावप्रविष्टः, स किं प्रत्येकाऽभावं द्वयात्मकमुतवा व्याप्तिविशिष्टपक्षधर्मत्वाभावरूपं, तत्र नाद्यः प्रत्येकाभावस्य सर्वत्र असिद्धिहेतौ अविद्यमानत्वात् ह्रदो वह्निमान् धूमादित्यादौ स्वरूपासिद्धेः धूमेव्याप्यत्वस्य व्याप्यत्वाभावस्य घटो द्रव्यं सत्वादित्यादौ व्याप्यत्वासिद्धेः पक्षधर्मत्वाभावस्य च विरहात् अव्याप्तत्वेन च न द्वयोरभावयोरसिद्धिसामान्यलक्षणत्वं संभवति। यदि च व्याप्तिविशिष्टपक्षधर्मत्वाभावः निवेश्यते तदा उक्त व्याप्यत्वासिद्धस्वरूपासिद्धयोः संग्रहेऽपि अयोगोल के-धूमवद्वह्ने ह्रदो वह्निमान् धूमादित्यादौ बाधसंकीर्णासिद्धेः असिद्धिलक्षणस्याव्याप्तिः तत्र व्याप्तिविशिष्टपक्षधर्मातायाश्चाऽप्रसिद्धया व्याप्तिविशिष्टपक्षधर्मत्वाभावस्यापि अप्रसिद्धत्वात्।

वस्तुत: व्याप्तिपक्षधर्मताविशिष्टज्ञानविषयाभाववत्वम् प्रत्येकाभावानुगतमसिद्धत्वम्।

न च व्यभिचारादे: कथं दोषत्वं सम्भवति व्यभिचारिणी हेतौ असिद्धे: आवश्यकतया तस्यैव दोषत्वसम्भव: इति वाच्यम्, असिद्धत्वज्ञानं प्रति लिंगज्ञानविधया व्यभिचारादिज्ञानस्य उपजीव्यतया प्रथमोपस्थिततत्वात् तदुद्भवेन विरोधित्वाविशेषाच्चव्यभिचारादिरपि दोष:। यदि असिद्धिज्ञानोपजीव्यग्राहकत्वेन व्यभिचारस्य दूषत्वं तदा तथात्वेन उपाधेरपि हेत्वाभासान्तरत्वमापद्येत इति चेत् उपाधिज्ञानं नासिद्धिज्ञानोपजीव्यं व्यभिचारज्ञानन्तु असिद्धिज्ञानोपजीव्यमत:-नोपाधे: हेत्वाभासान्तरत्वप्रसंग:।

केचित्तु "व्याप्तिपक्षधर्मताप्रमितिविरहआश्रयासिद्धयादानुगतोऽसिद्धि: "अर्थात् हेतुतावच्छेदकावच्छिन्न हेतुविशेष्यक साध्यतावच्छेदकावच्छिन्न-साध्यनिरूपित व्याप्ति विशिष्टपक्षतावच्छेदकाविच्छिन्नपक्षधर्मताप्रकारक-भ्रमभिन्नज्ञानविरह: असिद्धि: इति चेन्न। प्रमित्यंशस्य दूषकतायां प्रयोजकाभावात् अर्थात् प्रमिति विशेषणाघटित परामर्शज्ञाने प्रमितिविरहज्ञानस्याप्रतिबन्धकत्वात्। अथवा व्याप्तिपक्षधर्मता प्रमितिविरहरूपअसिद्धिअज्ञानशायां व्याप्त्यभावादिप्रत्येक-ज्ञानस्य सत्वात् तत्र उक्त लक्षणाव्याप्ति:।

न च प्रत्येकाभावेष्वसिद्धिलक्षणस्याव्याप्तिमभिधाय साधनविशेषणा-सिद्धयादिस्थले हेतुतावच्छेदकविशिष्ट हेत्वादेरप्रसिद्धया असम्भव: इति वाच्यम्।

वस्तुतस्तु प्रकृत हेतुतावच्छेदकविशिष्ट हेतुव्याप्तिपक्षधर्मता वैशिष्ट्यस्य तत्प्रमितेश्चाप्रसिद्धया तदभावो ज्ञातुमुद्भावयितुं चाशक्य एवं। "व्याप्ति प्रमिति पक्षधर्मता प्रमिति विरहान्यतरत्वमसिद्धि: इत्यपि न व्यर्थ विशेषणत्वात्।

"व्याप्तिपक्षधर्मतोभयप्रकारकनिर्णयाभाववत्वम्" असिद्धिदोषत्वम्। तन्न। असिद्धिस्थले पक्षधर्मत्वस्य वा व्याप्ते: भ्रमदशायां तत्र व्याप्तिपक्ष-धर्मतोभयप्रकारकनिश्चय सत्वात् तदभावस्याग्रहदशायामव्याप्ति:। अपि च हेतोरपि

हेत्वाभासापत्तिः हेत्वाभासस्यापि सद्धेत्वापत्तिश्च स्यात्। पक्षतावच्छेदकरूपेण पक्षे हेतुतावच्छेदक रूपेण हेतार्यद् विशिष्टज्ञानं साध्यतावच्छेदकाविशिष्ट–साध्यावगाहितद्विरोधित्वमसिद्धित्वम् अथवा विशिष्टपक्ष विशिष्ट–साधनवैशिष्ट्यविशिष्टसाध्यग्रहाविरोधियद् व्याप्तिग्रहविरोधि तदन्यत्वे सति परामर्शविरोधित्वम् तथा च आश्रयासिद्धिः पक्षे पक्षतावच्छेदकाभावरूपात्मकः साध्याप्रसिद्धिः साध्ये साध्यतावच्छेदकाभावरूपात्मकः साधनाप्रसिद्धिः साधने साधनतावच्छेदकाभावरूपात्मकश्चादेः विशिष्टपक्ष विशिष्टसाध्यविशिष्ट हेतोः प्रतिबन्धकतया परामर्शविरोधित्वात् सर्वत्र लक्षणसमन्वयः सम्भवति। किन्तु आश्रयासिद्धयादिस्थले विशिष्टपक्षाद्यप्रसिद्धया असम्भवात् नोक्तलक्षणं समीचीनम्।

## सिद्धान्तः

साधारण्यकथिताऽसाधारण्यानुपसंहारित्वभिन्नं ज्ञानस्य विषयताया परामर्शविरोधितावच्छेदकं रूपंतद्वत्त्वमसिद्धिः।

आश्रयाऽसिद्ध्याद्यन्यतमत्वं वा असिद्धेर्लक्षणम्। असिद्धिः त्रिविधा आश्रयासिद्धिः— स्वरूपासिद्धिव्याप्यत्वासिद्धिभेदेन।

साध्यहेत्वोधर्मर्मिसि पक्षे पक्षतावच्छेदकस्याभावः आश्रयासिद्धिः अथवा ज्ञानस्य विषयतया विशिष्टपक्षग्रहविरोधितावच्छेदकं रूपं वाश्रयासिद्धिः। यथा कांचनमयपर्वतो वह्निमान् धूमादित्यत्र कांचनमयत्वाभाववत् पर्वतरूपाश्रयासिद्धिः।

न केवलं पक्षे पक्षतावच्छेदकाभावः आश्रयासिद्धिः अपितु पक्षे पक्षतावच्छेदकविरहव्याप्यः, पक्षेपक्षतावच्छेदकवदन्योन्याभावः, पक्षे पक्षतावच्छेदकवदन्योन्याभावव्याप्यः, पक्षतावच्छेदके पक्षतावच्छेदकतावच्छेदकाभावः, पक्षतावच्छेदके पक्षतावच्छेदकतावच्छेदकाभावव्याप्यः, पक्षतावच्छेदके पक्षतावच्छेदकतावच्छेदकवदन्योन्याभावः, पक्षतावच्छेदकतावच्छेदकान्योन्याभावव्याप्यः पक्षतावच्छेदकाभाववान्पक्षः, पक्षतावच्छेदकाभावव्याप्यवान्पक्षः पक्षतावच्छेदकवदन्योन्याभाववान्पक्षः—

पक्षतावच्छेदकवदन्योन्याभावव्याप्यवान्पक्षः, पक्षतावच्छेदकतावच्छेकाभाववत् पक्षतावच्छेदकम्, पक्षतावच्छेदकतावच्छेदकभावव्याप्यवत्पक्षतावच्छेदकम्, पक्षतावच्छेदंकतावच्छेदकवदन्योन्याभाववत् पक्षतावच्छेदकम्,, पक्षतावच्छेदकतावच्छेदकबदन्योन्या भावव्याप्यवत्पक्षतावच्छेदकम्, इत्यपि आश्रयासिद्धिः।

समानप्रकारज्ञानस्यैव प्रतिबन्धकत्वमितिवादिनां नव्यानां नये पक्षतावच्छेकाभाववान्पक्षः, पंक्षतावच्छेदकाभावव्याप्यवान् पक्षः, पक्षतावच्छेदकवदन्योन्याभावववान् पक्षः, पक्षतावच्छेदकवदन्योन्याभावव्याप्यवान् पक्षः इत्यादिरेवाश्रयासिद्धिः न तु पक्षे पक्षतावच्छेदकाभावः तद्व्यात्प्यादिरपि च, तज्ज्ञानस्य अनुमितितत्करणपरामर्शाऽप्रतिबन्धकतया हेत्वाभासत्वस्यैतत्राभावात्। सर्वसाधारणानुगतआश्रयासिद्धिलक्षणंन्तु ''पक्षतावच्छेदकप्रकारक पक्षग्रह–विरोधितावच्छेदकत्वम्'' इति।

पक्षे हेतोरभावः स्वरूपासिद्धिः। स्वरूपासिद्धिदोषस्य प्रकृत पक्षे प्रकृत हेतुमत्त्वाज्ञानप्रतिबन्धकत्वं पक्षधर्मताज्ञानप्रतिबन्धकत्वमिति लक्षणम्। सोद्वयं स्वरूपासिद्धि शुभासिद्धभागासिद्धविशेषणासिद्धविशेष्यासिद्धभेदेन चतुर्विधः तत्र शब्दो गुणः चाक्षुषत्वात् इत्यत्र शुद्धासिद्धः द्वितीयस्तु घटपटादिकं पृथिवी घटत्वादित्यत्र। तृतीयस्तु वायुः प्रत्यक्षः, रूपवत्वे सति सपर्शवत्वात् इत्यत्र। चतुर्थस्तु वायुः प्रत्यक्षः स्पर्शवत्वेसति रूपवत्वात् एवं सम्बन्धासिद्धोऽपि बोध्यः– यथा–वायुः द्रव्यं संयोगेन स्पर्शवत्वात्। सर्वत्र लक्षणकरणे यदि लक्षणमव्याप्तिग्रस्तं तदा भागासिद्धेः अन्तर्भावः। यदि अतिव्याप्तिग्रस्तं तदाव्याप्यत्वासिद्धेऽन्तर्भावः यदा तु असम्भवग्रस्तं तदा स्वरूपासिद्धेः। एवं ज्ञानानुकूलकल्पनावशात् नानाविधेऽपि भवति स्वरूपासिद्धिदोषः यथा–साधनतावच्छेदकावच्छिन्न साधनाभाववत्पक्षः, तादृशसाधनाभावव्याप्यवत्पक्षः, साधनवदन्योन्याभाववान् पक्षः तादृशान्योन्याभावव्याप्यवान् पक्षः, पक्षे साधनतावच्छेदकावच्छिन्न प्रतियोगिताक–साधनाभावः, पक्षे तादृश साधनाभावव्याप्यः, पक्षे साधनतावच्छेदकावच्छिन्न–

साधनवदन्योन्याभाव:, पक्षे तादृशान्योन्याभाव व्याप्यश्चेति। समानप्रकारज्ञानस्यैव प्रतिबन्धकत्वादिनां नव्यनये साधनतावच्छेदकावच्छिन्न साधनाभाववत् पक्षादिरूप: चतुर्विध एव।

विशिष्टपक्षविशिष्टसाधनग्रहाविरोधिनो ज्ञानस्य विषयतया तदुभयवैशिष्ट्यग्रह विरोधितावच्छेदकं स्वरूपासिद्धि:।

वस्तुतस्तु पक्षतावच्छेदकावच्छिन्नपक्षविशेष्यक साधनतावच्छेदकावच्छिन्न साधनप्रकारक गह्वविरोधितावच्छेदकत्वं स्वरूपासिद्धत्वम्।

अग्रहीताप्रामाण्यकनिश्चयनिष्ठयदृशविशिष्टनिरूपितविषयिता सामान्यं तादृशग्रहविरोधिताऽनतिरिक्तवृत्तितादृशविशिष्टत्वमिति वा।

व्याप्यत्वासिद्धि:— स्वरूपासिद्धिभिन्नासिद्धश्च व्याप्यत्वासिद्धि:। अर्थात् यादृशविशिष्टमाश्रयासिद्धिर्यादृशविशिष्टं च स्वरूपासिद्धिस्तदुभयाविशष्टानिरूपितं साधारणत्व विरूद्धत्वानुपसंहारित्वनिरूपितं च निर्णयनिष्ठं यादृशविशिष्टनिरूपित विषयितासामान्यं परामर्शविरोधितानतिरिक्तवृत्ति तादृशविशिष्टं व्याप्यत्वासिद्धि: इति।

तेन ह्रदो वह्निमान् धूमादित्यादौ वह्नियव्याप्यधूमाभाववद्ह्रदादिरूप व्याप्यत्वासिद्धेर्विशिष्टस्यानतिरिक्ततया धूमाभाववद् ह्रदाद्यात्मकस्वरूपासिद्धि—भिन्नत्वाभावेऽपि नाव्याप्ति:।

व्याप्यत्वाऽसिद्धि: यथा—पर्वतो वह्निमान् नीलधूमात् इत्यत्र नीलधूमत्वादिकं धूमत्वापेक्षयागुरूशरीरतया न हेतुतावच्छेदकं भवति, किन्तु धूमत्वमेव हेतुतावच्छेदकं। गुरूत्वं च स्वविषयकग्रहत्वव्यापकव्यापकताका या संख्या तादृशसंख्यात्वावच्छिन्नऽवृत्तिर्य: संख्याविभाजकीभूतोयस्तद्वत् संख्यावच्छिन्नायोगिताकपर्याप्तिकावच्छेदकताक विषयता शून्य प्रतीति विषयतानवच्छेदकत्वम्, स्वं लघु धर्म:, तथा च धूमत्वविषयकग्रहत्वव्यापकता एकत्व संख्याव्यापकत्वे एव, न तु नीलत्वधूमत्वादिगतसमुदायत्वत्वं द्वित्वादिकजं

सद्धर्मवत्समुदायत्वावच्छिन्नायोगिताकपर्याप्तिकावच्छेदकताक विषयता-शून्यप्रतीतिविषयतावच्छेदकत्वस्य नीलत्वधूमत्वादिमत्वे सत्वेन धूमत्वापेक्षया तस्यगुरूत्वम्। लघुत्वञ्च स्वावच्छिन्नप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताक पर्याप्त्यनुयोगितावच्छेदकीभूतरूपवृत्तित्वम्, वृत्तित्वंच स्वविषयकग्रहत्व-व्यापकव्यापकताक संख्यात्वावच्छिन्नाऽवृत्तिसंख्याविभाजकीभूतधर्मवत्वसम्बन्धेन नीलधूमत्वावच्छिन्नप्रकारतावच्छेदकतात्वावच्छिन्न प्रतियोगिताकपर्याप्त्यनु योगितावच्छेदकं नीलत्वधूमत्वगतद्वित्वं तद्वृत्तित्वस्य धूमत्वे सत्वात् धूमत्वविषयकग्रहत्वव्यापकव्यापकताक संख्यात्वावच्छिन्नावृत्तिसंख्या विभाजकीभूतं "नीलत्वधूमगतसमुदायत्वगतसमुदायत्वत्वं तद्वत्वस्य तादृशसमुदायत्वे सत्वेन तेन सम्बन्धेन तादृशसमुदायत्ववृत्तित्वस्य धूमत्वे सत्वात्। अथवा स्वत्वस्याऽननुगत्वे तु "धूमत्वनिष्ठ लघुतानिरूपिताबाधितासमनियत धर्मवत्वं गुरूत्वम् लघुत्वञ्च नीलधूमत्वनिष्ठगुरूता निरूपिताऽबाधिता समनीयत धर्मवत्वम्। इति। न चाऽन्योन्याश्रयः, लघुत्वगुरूत्वयोस्तद्व्यक्तित्वेन प्रवेशात्। यद्वा इदमेतदपेक्षया गुरूलघु इति व्यवहारसाक्षिकः सावधिकोऽखण्डधर्मविशेषो गुरूत्वलघुत्वादिकम्।।।।

अथान्ये तु उपाध्यभावस्य व्याप्तितया सोपाधिको हेतुर्व्याप्यत्वासिद्ध इति वदन्ति। साध्यव्यापकत्वे इति साधनाऽव्यापकत्वमुपाधिः, स च चतुर्विधः, केवलसाध्यव्यापक, पक्षधर्मावच्छिन्नसाध्यव्यापकः, साधनावच्छिनसाध्यव्यापकः, उदासीनधर्मावच्छिन्न साध्यव्यापकश्चेति।

तत्राद्यः— पर्वतो धूमवान् वह्नेरित्यत्र आर्द्रेन्धन संयोगः। द्वितीयः वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात् इत्यत्र बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्व-व्यापकमुद्भूतरूपवत्वम् तृतीयो यथा प्रागभावो विनाशी, जन्यत्वात् इत्यत्र जन्यत्वावच्छिन्नऽनित्यत्वव्यापकं भावत्वम्। चतुर्थस्तु प्रागभावो, विनाशी प्रमेयत्वादित्यत्र जन्यत्वावच्छिन्नाऽनित्यत्वव्यापकं भावत्वम् अथ सविषयवृत्तिप्रकृतसाध्यसाधनग्रहविरोधितानवच्छेदकप्रकृतपक्षप्रकृत-

साधनवैशिष्ट्यग्रहविरोधितावच्छेदकरूपशून्यज्ञानस्य विषयोऽसिद्धिः व्याप्यत्वासिद्धः। मथुरानाथस्तु व्याप्यत्वासिद्धिस्त्रिविधासाध्यविशेषणासिद्धिः, साधनविशेषणासिद्धिः व्याप्तिरहरूपा चेति। साध्यतावच्छेदकप्रकारक साध्यग्रहविरोधितावच्छेदकरूपं साध्यविशेषणासिद्धिः। तादृशं रूपं साध्यतावच्छेदकाभाववत् साध्यम्, तादृशाभावंव्याप्यवत् साध्यम्, साध्यतावच्छेदकवदन्योन्याभाववत् साध्यम् तादृशान्योन्याभाव व्याप्यवत्साध्यम्, साध्यतावच्छेदकतावच्छेदकाभाव-वत्साध्यतावच्छेदकम्, तादृशाभावव्याप्यवत् साध्यतावच्छेदकं साध्यतावच्छेदकता वच्छेदकवदन्योन्याभाववत्साध्यतावच्छेदकम्, तादृशान्योन्याभावव्याप्यवत् साध्यतावच्छेदकम्।

भिन्नप्रकारकज्ञानस्यापि प्रतिबन्धकतानये तु साध्ये साध्यतावच्छेदकाभावः साध्ये तादृशाभावव्याप्यः, साध्ये साध्यतावच्छेदकवदन्योन्याभावः, साध्ये तादृशान्योन्याभावव्याप्यः, साध्यतावच्छेदके साध्यतावच्छेदकतावच्छेदक-वदन्योन्याभावः, साध्यताच्छेदके तादृशान्योन्याभावव्याप्यः इति।

साध्यतावच्छेदकप्रकारकसाधनग्रहविरोधिताच्छेदकरूपं साधन-विशेषणासिद्धिः। तादृशं रूपं साधनताच्छेदकाऽभाववत् साध्यमित्यादिकम्। यथा पर्वतो वह्निमान् कांचनमयधूमात्।

अथोक्तभिन्नव्याप्तिविरहरूपाऽसिद्धिस्वरूपं साध्याऽव्यभिचरित-सम्बन्धित्वरूपान्वयव्याप्त्यभाववत् साधनं, तादृशव्याप्त्यभावव्याप्यवत्, साधनम्, तादृशव्याप्तिमदन्योन्याभाववत्साधनम्। तादृशव्याप्तिमदन्योन्याभावव्याप्यवत् साधनम्, तादृश व्याप्तिमत् साधनाभाववत् पक्षः, तादृशव्याप्तिमत् साधनाभावव्याप्यवत्पक्षः, तादृशव्याप्तिमत् साध्यवदन्योन्याभाववान्पक्षः तादृशव्याप्तिमत्साधनवदन्योन्ययाभावव्याप्यवत्पक्षः, एवं साध्याभाव-व्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिमत् साधनाभाववत् पक्षादिः, साध्याभाववदवृत्तिसाधनाभाववत्पक्षादिः, साध्यसमानाधिकरणसाधनाभाववत्पक्षादिः। भिन्नप्रकारकज्ञानस्यापि प्रतिबन्धकतानये 'साधने तादृशाऽन्वयव्याप्त्यभावादिरिति।

# बाधितहेत्वाभासस्य स्वरूपम्

हेत्वाभासाः पंच इति प्रतिपादितम् चिन्तामणिकारेण वा गौतममहर्षिणा तत्र पंचमः हेत्वाभासः बाधितः इति। किं नाम बाधितः एतद् विषये चिन्त्यते—

• न च साध्याभाववत् पक्षकत्वम् वा पक्षवृत्यभावप्रतियोगिसाध्यकत्वं बाधः इति वाच्यम्, पक्षे साध्याभावज्ञानमात्रस्य प्रमात्वज्ञानं विना अधिकबलत्वा—ज्ञानबाधाभावादिति। तथा चननिरूक्तबाधविषयकत्वस्याप्रतिबन्धकसाधारणतया न तस्य दोषत्वम्। साध्याभाववत्पक्षवृत्तित्वमपि न बाधितः यतोहि यत्र बाधः तत्र असिद्धिरपि दोषः ह्रद पक्षकवह्निसाध्यकधूमहेतुकस्थले। तत्र वह्नभाववत्ह्रदवृत्तित्वाभाव एव धूमहेतौ वर्तते। अतः असिद्धिसंकीर्णबाधेऽव्याप्तिः।

साध्याभाववत्वप्रमाविषयपक्षकत्वं, प्रमितसाध्याभाववत्पक्षकत्वम्, पक्षनिष्टठ प्रमाविषयत्वप्रकाराभावप्रतियोगिसाध्यकत्वं, वेति बाधितत्वम्।

अथ पक्षविशेष्यक साध्याभावप्रकारक ज्ञाने प्रमात्वनिश्चयोऽनुमिंति—प्रतिबन्धकः, अतस्तादृशप्रमात्वमेव बाधः, न तु पक्षे साध्याभावो बाधः, प्रमात्वाभावस्तु अनुमितिकारणम्। सद्धेतुस्थले बाधज्ञानस्य भ्रमत्वनियमेन तत्र प्रमात्वात्मक बाधस्याप्रसिद्धया न हेतोःबाधितमिति—प्राचीनैकदेशिमतं न साधुः। ह्रदपक्षक वह्निसाध्यक धूम हेतुकस्थले ह्रदो वह्न्यभाववान् इदं ज्ञानं प्रमा इति यत् पक्षविशेष्यक साध्याभावप्रकारकज्ञान—धर्मिकं प्रकारत्वप्रकारकं ज्ञान बाध ज्ञानं तदपि न अनुमितिप्रतिबन्धकम्। अनुमितौ विधेयता ग्राह्यत्वेनाभिमतस्य वह्न्यादेः यः अभावः तस्य ग्राह्याभावतया" तद्वत्ताबुद्धिं प्रति ग्राह्याभावावगाहित्वेन तदभाववत्ताज्ञानात्मक बाधनिश्चयस्यैव प्रतिबन्धकत्वम् इति प्रतिबध्यप्रतिबन्धकभावस्य साक्षाद आनुभविक तर्कात्मकप्रमाणतया, ग्राह्याभावानवगाहिनः पक्षविशेष्यक साध्याभावज्ञानधर्मिक प्रमात्वनिश्चयस्य विरोधित्वे बाधत्वे च प्रमाणाभावात्।

पक्षविशेष्यकतद्वत्ता बुद्धिं प्रति पक्षविशेष्यकसाध्याभावप्रकारकनिश्चयस्य

प्रतिबन्धकत्वापेक्षया पक्षविशेष्यकसाध्याभावप्रकारक ज्ञानधर्मिक प्रमात्वनिश्चयस्य प्रतिबन्धकत्वे, पक्षविशेष्यकत्वापेक्षया पक्षविशेष्यक साध्याभावप्रकारक ज्ञानविशेष्यकत्वस्य साध्याभावप्रकारकनिश्चयत्वापेक्षयासाध्याभाववति साध्या—भावप्रकारकत्वरूप(प्रमात्व) निश्चयत्वस्य अतिगुरूत्वात्। अन्यथा सत्प्रतिक्षादावपि तदभावव्याप्यवत्ताज्ञाने प्रमात्वविषयकत्वेन प्रतिबन्धकतापत्तेः।

न च व्यभिचारधीसत्वादेवानुमित्यनुत्पादनिर्वाहे बाधे विरोधित्वान्तर—कल्पनायाः निर्युक्तिकत्वात् इति वाच्यम्। यद्रूपावच्छिन्न ,व्यभिचारस्य यद्रूपावच्छिन्नव्यापकताग्रहाधीनानुमितावेव विरोधितया उपनीततद्धर्मविशिष्ट—साध्यानुमितौ कांचनमयत्वावच्छिन्नवह्न्यभाववद् वृत्तित्वरूपव्यभिचारो अकिंचित्कर इति कथंचिद्विशिष्टसाध्यज्ञानाधीनबाध ग्रहदशायामुक्तानुमितेर्वारणाय बाधस्य हेत्वाभासत्वमावश्यकम्।

"साध्याभावव्याप्यसामानाधिकरण्यम्" बाधः वा। बाधस्य सिद्धान्तलक्षणन्तु "पक्षे साध्याभावनिश्चयः" साध्याभावज्ञाने प्रामाण्यसंशयोत्तरं तत्र प्रामाण्यनिश्चयं विना न साध्याभावानिश्चयस्तत् संशयस्य सामग्र्या अनिवृत्तेरिति स. तत् प्रमात्वनिश्चयाधीनः एवं प्रमात्वनिश्चयं विना अप्रामाण्यसंशययोग्यतया कथंचिदुत्पन्नोऽपि निश्चयो न निश्चय कार्यकारी अतस्तस्य निश्चयकार्यकारित्वमपि प्रमात्वनिश्चयाधीनः।

इदं तु तथ्यम् साध्याभाववान् पक्षः वा साध्यवदन्यो पक्षःपक्षावृत्तिसाध्यं पक्षेसाध्याभावः, पक्षनिष्ठसाध्याभाववत्वादिकं साध्यादेः पक्षावृत्तित्वादिकं, साध्यवत् सामान्यादेः पक्षान्यत्वादिकंविशिष्टसाध्ये पक्षादेर्विशेष्याभाववत्वादिकं—यथामतंपक्षे साध्यवत्ताज्ञानस्य साक्षात्विरोधिप्रत्येकमेव बाधः। तन्निश्चयश्च विरोधिनिश्चयत्वेन दोषविशेषाद्यजन्यज्ञानमात्र एव विरोधी। अत एव "अनन्वयनिश्चयविरहो योग्यता इत्याचार्याः।

विभाजकन्तु प्रकृतपक्ष प्रकृतसाध्यवैशिष्ट्यग्रहविरोध्युन्नायकत्वे

प्रकृतपक्षप्रकृ साध्यग्रहाविरोधित्वे च सति प्रकृतपक्षप्रकृतसाध्यवैशिष्ट्यग्रह– विरोधित्वम्। पक्षादेः साध्यासमानाधिकरणधर्मवत्वादिकमपिबाध एव साध्याभाववत्पक्षा दिज्ञानप्रमात्वन्तु न बाधः। तज्ज्ञानस्य पक्षादौ साध्याभावादेरनवगाहित्वे विरोधिविषयत्वाभावात् अवगाहित्वेतु तद्विषयत्वेनैव प्रतिबन्धकत्वात् प्रमात्वनिश्चयस्यान्यत्र प्रतिबन्धकत्वाकल्पनाच्च।

तथा च पूर्वोक्तविभाजकलक्षणे सत्प्रतिपक्षेऽतिव्याप्तिवारणाय प्रथमं सत्यन्तम्। पक्षाप्रसिद्धि साध्याप्रसिद्धयोर्वारणाय द्वितीयम्। उदासीनवारणाय विशेष्यम्। यद्यपि साध्याभावविशिष्टप्रकृतपक्षादिरूपबाधे विरोध्युन्नायक– साध्याभावव्याप्यविशिष्टपक्षाद्यन्यत्वं विशिष्टपक्षादिग्रहविरोधिपक्षतावच्छेदका– भावविशिष्ट पक्षाद्यन्यत्वं चासिद्धम् तथापि यादृशविशिष्ट निरूपित विषयिता विरोध्यनुमितिजनकतावच्छेदकत्वे सतिं विशिष्टपक्षग्रहत्वस्य विशिष्टसाध्यग्रहत्वस्य च न्यूनवृत्तिर्या विशिष्टपक्षे विशिष्टसाध्यवैशिष्ट्यग्रहत्वान्यूनवृत्तिः प्रतिबध्यता तन्निरूपित प्रतिबन्धकतावच्छेदिका तादृशत्वम् बाधत्वम्।

अत्र लक्षणे वह्निमान् ह्रदो वह्निमान् इत्यादौ वह्न्यभावविशिष्ट ह्रदादिरूपे बाधेऽव्याप्तिः, तद्विषयकत्वाक्छिन्न प्रतिबन्धकता निरूपित प्रति– बध्यतायाः विशष्टपक्षग्रहत्वव्यापकत्वात्।

न च पक्षतावच्छेदकादि भेदेन बाधलक्षणस्य भिन्नतया यत्र साध्यमेव पक्षतावच्छेदकं तत्र विशिष्टपक्षग्रहविरोधित्वस्यानिवेशनीयतया नाश्रयासिद्ध्याद्यात्मक बाधासंग्रह इति वाच्य्। वह्निमान् कांचनमय ह्रदो वह्निमान् इत्यादौ कान्चनमयत्वाभाव विशिष्ट ह्रदादिरूपाश्रयासिद्धयादावतिव्याप्ति वारणाय तादृश पक्षकतत्स्थलीय बाधलक्षणेऽविरोधित्वान्तरस्यावश्यं निवेशनीयत्वात्। तत्र त्वाश्रयासिद्धिरूपबाधे अव्याप्तेर्दुर्वारत्वात् इति चेन्न। आश्रयासिद्धयात्मकस्य तस्यालक्ष्यत्वाल्लक्ष्यत्वे तु उद्देश्यतावछेदकता विधयतावच्छेदकतातिरिक्त विशिष्टपक्षे विशिष्ट साध्यावैशिष्ट्य बोधीयविषयान्तः पाति प्रकारतावच्छिन्न प्रतिबध्यता निरूपित प्रतिबन्धकतावच्छेदक विषयिताकत्वस्याविरोधित्वान्त–

सहितविरोधित्वान्तेन विवक्षणात्।

कांचनमय ह्रदो वह्निमानित्यादौ आश्रयासिद्ध्यादिज्ञानस्य प्रतिबध्यता–वच्छेदिका न उद्देश्यतावच्छेदकाभिन्ना विशिष्टपक्षविशिष्ट साध्यवैशिष्ट्य बोधीयविषयतान्त:पातिनीप्रकारता इति तद्व्युदास:। उक्तपक्षप्रसिद्धिरूपबाधबुद्धेश्च तादृशप्रकारताभिन्ना या विधेयमुद्रया या उक्त विशिष्टवैशिष्ट्यविषयतान्त: पातिनी(साध्य) प्रकारता तस्या अपि ह्रदत्वावच्छिन्न विशेष्यता निरूपित विशेष्यता निरूपित वह्न्यादि प्रकारतात्वेन प्रतिबध्यतावच्छेदकत्वान्न तादृशबाधसंग्रह। प्रकारताया: उक्त विशिष्टवैशिष्ट्यविषयता शालिज्ञानवृत्तित्वमुपेक्ष्य तादृशविषयतान्त: पातित्वनिवेशाच्च कांचनमयह्रदो वह्निमान् ह्रदश्च कांचनमय इत्येतादृशाज्ञानीया याविधेयमुद्रया प्रकारता तस्या ह्रदत्वावच्छिन्नविशेष्यता–निरूपितकांचनमयत्वादिप्रकारतात्वेनाश्रयासिद्धि ज्ञानप्रतिबध्यतावच्छेदकत्वेऽपि नातिप्रसंग:।

न च तथापि पर्वतो वह्निव्याप्याभाववह्न्यभावोभयवानित्यादौ वह्निव्याप्यवत् पर्वतादिरूप बाधेव्याप्ति:। तस्य तस्य वह्निमत् पर्वतरूप विरोध्युन्नायकत्वात् इति वाच्यम्। विरोधितान्तघटक प्रतिबन्धकतावच्छेदकविषयतायां विरोध्युन्नायकंतानवच्छेदकमनिवेश्यतादृश प्रतिबन्धकतायां स्वनिरूपित प्रतिबध्यतावच्छेदकविषयत्वावच्छिन्न प्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदक–विषयत्वावच्छिन्नानुमितिनिष्ठ जन्यतानिरूपित जनकतावच्छेदक विषयत्वा–वच्छिन्नत्वस्य प्रतिबन्धकतायां निवेशनीयत्वात्। प्रकृते च वह्निव्याप्याभाववत्ता ज्ञानत्वावच्छिन्न प्रतिबध्यता निरूपित प्रतिबन्धकतामादायोक्तबाधे लक्षणसमन्वय सम्भवात्। तथाहि तादृश प्रतिबन्धकता निरूपित प्रतिबध्यतावच्छेदकं न वह्न्यभाववत् पर्वतज्ञानत्वं, किन्तु वह्निव्याप्याभाववत् पर्वत ज्ञानत्वमेवातस्तादृशप्रतिबन्धकताया: वह्न्यभाववत्पर्वत ज्ञानविरोधिवह्निमत् पर्वतोन्नायकतावच्छेदकवह्निव्याप्यवत् पर्वतविषयितावच्छिन्नत्वेऽपि वह्निव्याप्याभाववत् पर्वत ज्ञान विरोधि वह्नियव्याप्यवत् पर्वतोन्नायकतावच्छेदक

वह्निव्याप्यवत् पर्वत विषयतावच्छिन्नत्वस्याक्षतत्वादिति। तथा च उद्देश्यतावच्छेदकता विधेयतावच्छेदकतातिरिक्त विशिष्ट पक्ष विशिष्ट साध्यविशिष्ट वैशिष्ट्यबोधीय विषयतान्तःपातिप्रकारत्वावच्छिन्न प्रतिबध्यतानिरूपित सती स्वनिरूपित प्रतिबध्यतावच्छेदक विषयित्वावच्छिन्न प्रतिबध्यता निरूपित प्रतिबन्धकतावच्छेदकीभूतविषयित्वावच्छिन्न प्रतिबध्यता। निरूपित प्रतिबन्धकता—वच्छेदकी भूतविषयित्वावच्छिन्नानुमिति निष्ठजन्यतानिरूपित जनकतावच्छेदकीभूतविषयित्वानवच्छिन्न प्रतिबध्यता निरूपित प्रतिबन्धकता—वच्छेदकविषयिताकत्वम्।

